# विषयानुक्रमः

## आमुखम्

अस्य पुस्तकस्य अस्मिन् द्वितीये संस्करणे अस्माभिः बहूनि परिवर्तनानि कृतानि । भाषायाः शिक्षणं संलापैः नाटकैश्च उत्तमतया भवति इति मनसि निधाय इदं पुस्तकम् आद्युपान्तम् आलापमयं कृतम् । कथानां पुस्तकानि पृथक् प्रकाशयिष्यामः इति हेतोः प्रथमसंस्करणस्थः कथाभागः अत्र वारितः । तत्स्थाने लोकसंस्कृत-पत्रिकायां प्रकाशिताः केचन आलापाः लघुनाटकानि च प्रदत्तानि । केचित् नूतनाः विषयाः अपि अत्र वर्तन्ते । कठिन-शब्दानाम् आङ्ग्ल्यर्थाः पुस्तकस्य अन्ते प्रदत्ताः । तथापि यदि कुत्रापि किमपि अबोध्यं भवेत् तर्हि वयं पत्राचारेण सूचनीयाः भवद्भिः । लोकसंस्कृतपत्रिकामाध्यमेन भवतां शङ्कासमाधानं करिष्यामः ।

संस्कृतस्य पद्धतिबद्ध-शिक्षणार्थं सरलसंस्कृतसरणेः द्वौ भागौ, सम्भाषणार्थम् इदं पुस्तकम् 'अर्घ्यम्' च इति एतानि पुस्तकानि उपादेयानि ।

कथानाम्, नाटकानां सरलसंस्कृतपाठानां च पुस्तकानि प्रकाशनीयानि सन्ति । संस्कृतं सुजीवद्भाषां कुरुत इति श्रीमातुः उपदेशं चरितार्थयितुम् अन्याः अपि योजनाः वर्तन्ते । यथा यथा संस्कृतप्रेमिणां सहयोगः अस्माकम् आर्थिकसामर्थ्यं च वर्धिष्येते तथा तथा तासां कार्यान्वयनं करिष्यामः ।

प्रस्तुतं पुस्तकं संस्कृतस्य सम्भाषणसामर्थ्यवर्धने भवतां प्रवर्धमानां रुचिं परिपोषयतु इति नः मातृचरणयोः प्रार्थना ।

—प्रकाशकः

ॐ देवीं वाचमुपास्महे भगवतीं
वाग्देवतायै नमः ।

# प्रार्थना

ॐ यामृषयो मन्त्रकृतो मनीषिणः
अन्वैच्छन् देवास्तपसा श्रमेण ।
तां देवीं वाचं हविषा यजामहे
सा नो दधातु सुकृतस्य लोके ॥
(तैत्तिरीयब्राह्मणम् २. ८. ८. ५)

याम् [वाग्देवीम्] मन्त्रकृतः, मनीषिणः, ऋषयः, देवाः तपसा, श्रमेण अन्वैच्छन् तां देवीं वाचं हविषा यजामहे [वयम्]। सा नः सुकृतस्य लोके दधातु ।

(मन्यते चिन्त्यते भगवान् अनेन इति मन्त्रः । मन्त्रं करोति इति मन्त्रकृत् । मन्त्रकृतः—मन्त्राणां साक्षात्कर्तारः । मनीषा अस्य अस्ति इति मनीषी । मनीषा—प्रज्ञा, यथार्थज्ञानम् । मनीषिणः—प्रज्ञावन्तः । अन्वैच्छन्—अन्वैषयन्, अन्वेषणेन प्राप्तुम् ऐच्छन् । हविषा—आहुत्या, बहिरन्तराहुत्या, आत्माहुत्या, स्वस्य स्वकीयस्य च अर्पणेन । यजामहे—यजामः, पूजयामः । नः—अस्मान् । सुकृतस्य लोके—पुण्यार्जिते लोके, उच्चतम-चेतना-लोके, प्रकाशानन्दमयलोके । दधातु—प्रतिष्ठापयतु ।)

मन्त्रद्रष्टारः, ज्ञानिनः, ऋषयः देवाः च यां वाग्देवीं तपस्यया प्रयासेन च अन्वेषितवन्तः तां वयम् आत्माहुत्या पूजयामः। सा अस्मान् पुण्यकर्मणां लोकं प्रापयतु।

*

ॐ भद्राहं नो मध्यंदिने भद्राहं सायमस्तु नः।
भद्राहं नो अह्नां प्राता रात्री भद्राहमस्तु नः॥
(अथर्ववेदः ६. १२८. २)

मध्यंदिने नः भद्राहम्, सायम् नः भद्राहम् अस्तु।
अह्नां प्रातः नः भद्राहम्, रात्री नः भद्राहम् अस्तु।

(मध्यंदिने–मध्याह्ने, मध्यदिने। नः–अस्माकं कृते। भद्राहम्–भद्रदिनम्, मङ्गलदिनम्, शुभदिनम्, सुदिनम्। अस्तु–भवतु। अह्नाम्–दिनानाम्, दिवसानाम्। प्रातः–प्रभाते। रात्री–रात्रिः।)

अस्माकं कृते सदा सुप्रभातम्, सुदिनम्, सुसायं सुरात्रिश्च भवतु।

# प्रथमालापः

सञ्जय ! अत्र आगच्छ। पश्य, इदं कस्य भाचित्रम् ?

(सञ्जयः भाचित्रं पश्यति।) आर्य ! इदं मम भाचित्रम्।

कथं जानासि ?

भाचित्रे अहम् अस्मि।

भाचित्रे त्वम् असि ? कुत्र ? दर्शय।

पश्यतु आर्य ! एषः अहम्।

एषः त्वम् ?

आम् आर्य ! एषः अहम्।

एषः कः ?

एषः मम पिता।

एषः कः ?

एषः मम भ्राता।

एषः कः ?

एषोऽपि मम भ्राता। एषः मम ज्येष्ठः भ्राता। एषः मम कनिष्ठः भ्राता।

एषा का ?

एषा मम माता।

एषा का ?

एषा मम भगिनी।

एषा का ?

एषाऽपि मम भगिनी। एषा मम ज्येष्ठा भगिनी। एषा मम कनिष्ठा भगिनी।

तर्हि एषः तव ज्येष्ठः भ्राता। एषा तव ज्येष्ठा भगिनी।

आम् आर्य !

अनयोः भ्रातृभगिन्योः कः ज्यायान्, कः प्रथमं जातः ? अनयोः कस्य वयः अधिकम् ?

अनयोः भगिनी ज्यायसी, सा प्रथमं जाता। तस्याः वयः अधिकम्।

पश्य, एषः तव कनिष्ठः भ्राता। एषा तव कनिष्ठा भगिनी। नैवम् ?

आम् आर्य !

अनयोः कः ज्यायान् ? —भ्राता वा भगिनी वा ?

भ्राता ज्यायान्, सः प्रथमं जातः। तत्परम् इयं जाता।

तर्हि युष्मासु पञ्चसु एषा भगिनी ज्येष्ठा एषः भ्राता च कनिष्ठः। नैवम् ?

आम् आर्य !

तव ज्येष्ठा भगिनी कुत्र पठति ?

महाविद्यालये आर्य !

कस्मिन् वर्षे ?

स्नातकचर्यायाः प्रथमे वर्षे।

तव ज्येष्ठः भ्राता कुत्र पठति ?
अत्रैव आर्य !

अत्र पठति ? कस्यां श्रेण्याम् ?
दशमश्रेण्याम् ।

तस्य नाम किम् ?
तस्य नाम विजयः ।

ओ, विजयः तव भ्राता ? त्वं तस्य अनुजः ?
आम् आर्य !

साधु, साधु । तव कनिष्ठः भ्राता कनिष्ठा भगिनी च कस्यां श्रेण्यां पठतः ?

मम कनिष्ठः भ्राता षष्ठश्रेण्यां पठति कनिष्ठा भगिनी च तृतीयश्रेण्याम् ।

अस्तु, गृहाण स्वपरिवारस्य भाचित्रम् । ह्यः त्वया अत्र त्यक्तम् आसीत् ।
धन्यवादाः आर्य !

### अभ्यासाः

(क) सः कः ? सः सुरेशः ।
त्वं कः ? अहं रमेशः ।
अहं कः ? भवान् जगन्नाथार्यः ।
एषः कः ? एषः गोपालः ।

सा का ? सा सावित्री ।
त्वं का ? अहं गायत्री ।
अहं का ? भवती वसुधार्या ।

पुंलिङ्गे सः, एषः/अयम्*, कः, भवान् ।
स्त्रीलिङ्गे सा, एषा/इयम्*, का, भवती ।
नपुंसकलिङ्गे तत्, एतत्/इदम्*, किम् ।

(ख) विपरीतशब्दाः –

गच्छ आगच्छ । गृहाण देहि ।
पिता माता । भ्राता भगिनी ।
ज्येष्ठः कनिष्ठः । ज्येष्ठा कनिष्ठा ।

(ग) उत्तरं देहि ।

तव नाम किम् ? मम नाम किम् ? तस्य बालकस्य नाम किम् ? अस्य बालकस्य नाम किम् ? कस्य नाम सुरेशः ? भवतः नाम किम् ? तस्याः बालिकायाः नाम किम् ? अस्याः बालिकायाः नाम किम् ? कस्याः नाम सावित्री ? भवत्याः नाम किम् ? तस्य पुष्पस्य नाम किम् ? अस्य फलस्य नाम किम् ?

---

*Now-a-days scholars make no difference between the words एषः, अयम्; एषा, इयम्; एतत्, इदम् meaning 'This'.

पुंलिङ्गे तस्य, एतस्य/अस्य, कस्य, भवतः ।

स्त्रीलिङ्गे तस्याः, एतस्याः/अस्याः, कस्याः, भवत्याः ।

नपुंसकलिङ्गे तस्य, एतस्य/अस्य, कस्य ।

(घ) सन्धिं कुरु ।

एषः + अपि = एषोऽपि ।

सः + अपि = ...

कः + अपि = ...

एषा + अपि = एषाऽपि ।

सा + अपि = ...

का + अपि = ...

## द्वितीयालापः

किं तव नाम ?

मम नाम सुरेशः ।

किं तव पितुः नाम ?

मम पितुः नाम दीनबन्धुः ।

कुत्र तव जन्मस्थानम् ?

मम जन्मस्थानम् उत्कलदेशे, बालेश्वरमण्डले ।

तव गृहे के सन्ति ?

मम गृहे माता, पिता, पितृव्यः, पितृव्यपत्नी, भ्राता भगिनी च सन्ति ।

किं तव वयः ?

मम वयः चतुर्दश वर्षाणि ।

त्वं कस्मिन् विद्यालये पठसि ?

अहं मण्डलोच्चविद्यालये पठामि ।

त्वं कस्यां श्रेण्यां पठसि ?

अहं दशमश्रेण्यां पठामि ।

तव विद्यालये कति छात्राः सन्ति ?

अस्माकं विद्यालये सार्धसहस्रं छात्राः सन्ति ।

कति शिक्षकाः सन्ति ?

पञ्चाशत् शिक्षकाः सन्ति ।

तव विद्यालये क्रीडाक्षेत्रम् अस्ति किम् ?

आम्, अस्माकं विद्यालये एकं विशालं क्रीडाक्षेत्रम् अस्ति ।

तत्र के के खेलाः भवन्ति ?

तत्र पत्कन्दुकम्, यष्टिकन्दुकम्, अपातकन्दुकम्, फालका, शिक्यकन्दुकम् इत्यादयः खेलाः भवन्ति ।

अपि त्वं प्रतिदिनं खेलसि ?

आम्, अहं प्रतिदिनं खेलामि ।

साधु, कृपया हस्तघटीं पश्य । अधुना कतिवादनम् ?

अधुना पञ्चवादनम् ।

त्वम् अधुना कुत्र गच्छसि ?
अहम् अधुना खेलाङ्गनं गच्छामि ।
खेलाङ्गनात् कदा प्रत्यागमिष्यसि ?
खेलाङ्गनात् सार्धषड्वादने प्रत्यागमिष्यामि ।
खेलाङ्गने किं करिष्यसि ?
खेलाङ्गने व्यायामं करिष्यामि ।
न खेलसि किम् ?
आम्, खेलामि, न तु प्रतिदिनम् ।
कुतः प्रतिदिनं न खेलसि ?
खेलात् व्यायामम् अधिकं रोचये ।
किमर्थम् ?

व्यायामेन शरीरस्य प्रत्येकम् अङ्गस्य चालनं भवति । तत्र जयस्य पराजयस्य वा प्रश्नः नास्ति । अतः आवेगेन शरीरे अत्याचारः न भवति ।

व्यायामेन कः लाभः भवति ?

व्यायामेन शरीरं सुन्दरम्, नम्यं सुदृढं च भवति । रोगाः आक्रमितुं न शक्नुवन्ति । मनः प्रफुल्लं भवति, आत्मानुशासनं वर्धते । व्यायामेन योगसाधना सुकरा भवति । अतः 'शरीरमाद्यं खलु धर्मसाधनम्' इति कथ्यते ।

अहं त्वया सह कतिचित् दिनानि व्यायामं कर्तुम् इच्छामि ।
खेलाङ्गने व्यायामार्थं त्वया अनुमतिः प्राप्ता किम् ?

आम्, प्राप्ता ।

सुष्ठु, आगच्छ, सह व्यायामं करिष्यावः ।

## अभ्यासाः

(क) रिक्तस्थानं पूरय –

अयं मम पिता । मम पितुः नाम ...
अयं मम भ्राता । ... ... ... ...
इयं मम माता । ... ... ... ...
इयं मम स्वसा । ... ... ... ...

अयं मम पितृव्यः । मम पितृव्यस्य नाम ...
अयं मम पितामहः । ... ... ... ...
अयं मम मातुलः । ... ... ... ...
अयं मम पुत्रः । ... ... ... ...

इयं मम भगिनी । मम भगिन्याः नाम ...
इयं मम सहपाठिनी । ... ... ... ...
इयं मम पितृव्यपत्नी । ... ... ... ...
इयं मम पुत्री । ... ... ... ...

इयम् अस्माकं शिक्षिका । अस्माकं शिक्षिकायाः नाम ...
इयम् अस्माकं पाठशाला । ... ... ... ...
इयम् अस्माकं सेविका । ... ... ... ...
इयम् अस्माकम् अध्यापिका । ... ... ... ...

| (ख) एकवचनम् | बहुवचनम् |
|---|---|
| मम | अस्माकम् |
| तव | युष्माकम् |
| तस्य | तेषाम् |
| एतस्य | एतेषाम् |
| कस्य | केषाम् |
| अस्य | एषाम् |
| बालकस्य | बालकानाम् |
| भवतः | भवताम् |
| तस्याः | तासाम् |
| एतस्याः | एतासाम् |
| कस्याः | कासाम् |
| अस्याः | आसाम् |
| बालिकायाः | बालिकानाम् |
| भवत्याः | भवतीनाम् |

रिक्तस्थानं पूरय –

अस्य बालकस्य । एषां बालकानाम्
अस्य सेवकस्य । ... ...
अस्य अध्यापकस्य । ... ...

तस्य पुत्रस्य । तेषां पुत्राणाम्
तस्य छात्रस्य । ... ...
तस्य शिक्षकस्य । ... ...

| (ग) एकवचनम् | बहुवचनम् |
|---|---|
| सः | ते |
| एषः | एते |
| कः | के |
| अयम् | इमे |
| बालकः | बालकाः |
| सा | ताः |
| एषा | एताः |
| का | काः |
| इयम् | इमाः |
| बालिका | बालिकाः |
| भवान् | भवन्तः |
| भवती | भवत्यः |
| अहम् | वयम् |
| त्वम् | यूयम् । |

रिक्तस्थानं पूरय –

| | | | |
|---|---|---|---|
| सः | कः ? | ते | के ? |
| एषः | कः ? | ... | ... |
| अयं | कः ? | ... | ... |
| भवान् | कः ? | ... | ... |
| एषः बालकः | कः ? | ... | ... |

| | |
|---|---|
| सा का ? | ताः काः ? |
| एषा का ? | ... ... |
| इयं का ? | ... ... |
| भवती का ? | ... ... |
| इयं बालिका का ? | ... ... |

| | |
|---|---|
| सः अस्ति (is)। | ते सन्ति। |
| सः पठति (reads)। | ते पठन्ति। |
| सा आगच्छति (comes)। | ... ... |
| एषा लिखति (writes)। | ... ... |
| इयं बालिका पश्यति (sees)। | ... ... |
| एषः बालकः खेलति (plays)। | ... ... |
| भवान् गायति (sings)। | ... ... |
| भवती नृत्यति (dances)। | ... ... |

| | |
|---|---|
| अहं खादामि (eat)। | वयं खादामः। |
| अहम् आस्वादयामि (taste)। | ... ... |
| अहं पिबामि (drink)। | ... ... |

| | |
|---|---|
| त्वं गच्छसि (go)। | यूयं गच्छथ। |
| त्वं धावसि (run)। | ... ... |
| त्वं हससि (laugh)। | ... ... |

# तृतीयालापः

अद्य कः वारः ?
अद्य गुरुवारः ।

अद्य कः दिनाङ्कः ?
अद्य पञ्चदशः दिनाङ्कः ।

ह्यः कः वारः आसीत् ?
ह्यः बुधवारः आसीत् ।

परोह्यः कः वारः आसीत् ?
परोह्यः मङ्गलवारः आसीत् ।

श्वः कः वारः भविष्यति ?
श्वः शुक्रवारः भविष्यति ।

परश्वः कः वारः भविष्यति ?
परश्वः शनिवारः भविष्यति ।

सप्ताहे कति दिनानि सन्ति ?
सप्ताहे सप्त दिनानि सन्ति ।

सप्ताहस्य प्रथमं दिनं किम् ?
सोमवारः सप्ताहस्य प्रथमं दिनम् ।

तर्हि गुरुवारः सप्ताहस्य कतमत् दिनम् ?
गुरुवारः सप्ताहस्य चतुर्थं दिनम् ।

एकस्मिन् मासे कति सप्ताहाः भवन्ति ?
एकस्मिन् मासे चत्वारः सप्ताहाः भवन्ति ।

एकस्मिन् मासे कति पक्षाः भवन्ति ?
एकस्मिन् मासे द्वौ पक्षौ भवतः ।

तौ कौ ?
शुक्लपक्षः कृष्णपक्षः च ।

'अयं शुक्लपक्षः' इति कथं जानासि ?
दिनानुदिनं चन्द्रस्य वृद्धि दृष्ट्वा 'अयं शुक्लपक्षः' इति जानामि ।

चन्द्रः प्रतिपदातः पूर्णिमां यावत् क्रमशः वर्धते । कदा स क्षीयते ?
स प्रतिपदातः अमावास्यापर्यन्तं क्रमशः क्षीयते ।

कदा चन्द्रः न दृश्यते ?
अमावास्यायां चन्द्रः न दृश्यते ।

कदा चन्द्रः पूर्णः दृश्यते ?
पूर्णिमायां चन्द्रः पूर्णः दृश्यते ।

सूर्यस्य ज्योतिः आतपः कथ्यते । नैवम् ?
आम्, आम् । मध्याह्ने आतपः प्रखरः भवति । अहं तं सोढुं न शक्नोमि ।

यथा सूर्यस्य आतपः अस्ति तथा चन्द्रस्य किम् अस्ति ?

चन्द्रस्य प्रकाशः किं कथ्यते ?
चन्द्रस्य प्रकाशः ज्योत्स्ना चन्द्रिका वा कथ्यते ।

सूर्यः कदा उदयति ?
सूर्यः प्रातः उदयति ।

सूर्यः कस्यां दिशि उदयति ?
सूर्यः पूर्वस्यां दिशि उदयति ।

सूर्यः कदा अस्तं गच्छति ?
सूर्यः सायम् अस्तं गच्छति ।

सः कस्यां दिशि अस्तं गच्छति ?
सः पश्चिमायां दिशि अस्तं गच्छति ।

हिमालयः कस्यां दिशि वर्तते ?
हिमालयः उत्तरस्यां दिशि वर्तते ।

श्रीलङ्का कस्यां दिशि वर्तते ?
श्रीलङ्का दक्षिणस्यां दिशि वर्तते ।

अपि त्वया श्रीलङ्का दृष्टा ?
न हि । मया श्रीलङ्का न दृष्टा ।

अपि त्वया रावणः दृष्टः ?
न हि । मया रावणः न दृष्टः ।

अपि त्वया असुरः दृष्टः ?
न हि । मया असुरः न दृष्टः ।

अपि त्वया रावणविषये किमपि श्रुतम् ?
आम्, श्रुतम् ।
किं श्रुतम् ? रावणस्य कति मस्तकानि आसन् ?
रावणस्य दश मस्तकानि आसन् । अतः स दशाननः कथ्यते ।
रावणस्य कति हस्ताः आसन् ?
रावणस्य विंशतिः हस्ताः आसन् ।
तव कति हस्ताः सन्ति ?
मम द्वौ हस्तौ स्तः ।
तव कति पादाः सन्ति ?
मम द्वौ पादौ स्तः ।
रावणस्य दश मस्तकानि आसन् । तस्य विंशतिः हस्ताः आसन् । तर्हि तस्य कति पादाः आसन् ?
न जाने । मन्ये, दश पादाः आसन् !
न हि । तस्य अस्माकम् इव द्वौ पादौ आस्ताम् ।
त्वं कुम्भकर्णं जानासि ?
आम्, जानामि ।
कः सः ?
सः रावणस्य भ्राता ।
त्वं कस्य भ्राता ?
अहं विजयस्य भ्राता/मम भ्राता नास्ति ।

अस्तु । कुम्भकर्णः बहु स्वपिति स्म । नैवम् ?
आम्, आम् । स बहु स्वपिति स्म ।

युष्मासु कः बहु स्वपिति ?
अयम्, अयम् । अयं बहु स्वपिति । तस्य भगिनी तं 'कुम्भकर्ण' इति आह्वयति ।

सः कति होराः स्वपिति ?
सः दश होराः स्वपिति ।

एकस्यां होरायां कति कलाः भवन्ति ?
एकस्यां होरायां षष्टिः कलाः भवन्ति ।

एकस्यां कलायां कति विकलाः भवन्ति ?
एकस्यां कलायां षष्टिः विकलाः भवन्ति ।

अस्तु, सः प्रतिदिनं दश होराः स्वपिति । नैवम् ?
आम्, आम् ।

सः कतिवादनात् कतिवादनं यावत् स्वपिति ?
सः रात्रौ नववादनात् प्रातः षड्वादनं यावत् स्वपिति । अपि च, मध्याह्ने सपाद-द्वादशवादनात् सपाद-एकवादनं यावत् स्वपिति ।
तर्हि सः न तावद् अधिकं स्वपिति । यूयं बालकाः । यूयं प्रतिदिनं नियमितं व्यायामं कुरुथ । अतः युष्माभिः बहु स्वप्तव्यम् ।
कुम्भकर्णस्तु षण्मासान् स्वपिति स्म ! सः वर्षस्य अर्धं

शयने यापयति स्म । अन्यार्धे सः किं करोति स्म ? अपि जानीथ यूयम् ?

आम्, सः खादित्वा पुनः स्वपिति स्म ।

आस्ताम् अत्रैव । समयः सञ्जातः । पुनर्दर्शनाय । पुनर्दर्शनाय ।

## अभ्यासाः

रिक्तस्थानं पूरय –

| एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- |
| सः | तौ | ते |
| एषः | एतौ | ... |
| कः | कौ | ... |
| यः | ... | ... |
| सर्वः | ... | ... |
| अन्यः | ... | ... |
| अयम् | इमौ | ... |
| ... | ... | बालकाः |
| सा | ते | ताः |
| एषा | ... | ... |
| का | ... | ... |
| या | ... | ... |
| सर्वा | ... | ... |

| | | |
|---|---|---|
| अन्या | ... | ... |
| इयम् | इमे | ... |
| बालिका | ... | ... |
| तत् | ते | तानि |
| एतत् | ... | ... |
| अन्यत् | ... | ... |
| किम् | के | ... |
| सर्वम् | ... | ... |
| इदम् | इमे | ... |
| फलम् | फले | ... |
| ... | भवत्यौ | भवत्यः |
| ... | भवन्तौ | भवन्तः |
| ... | आवाम् | वयम् |
| ... | युवाम् | ... |
| अस्ति | स्तः | ... |
| पठति | ... | ... |
| ... | ... | लिखन्ति |
| ... | तिष्ठतः | ... |
| भवति | ... | ... |
| खादामि | खादावः | ... |
| ... | ... | आस्वादयामः |
| पश्यामि | ... | ... |

| | | |
|---|---|---|
| ... | ... | पिवामः |
| ... | ... | गायामः |
| गच्छसि | गच्छथः | ... |
| धावसि | ... | ... |
| हससि | ... | ... |
| ... | ... | खेलथ |
| नृत्यसि | ... | ... |

| | | |
|---|---|---|
| करोति does | कुरुतः | कुर्वन्ति |
| शृणोति hears | शृणुतः | शृण्वन्ति |
| शक्नोति is able | शक्नुतः | शक्नुवन्ति |
| प्राप्नोति gets | प्राप्नुतः | प्राप्नुवन्ति |
| जानाति knows | जानीतः | जानन्ति |
| गृह्णाति takes | गृह्णीतः | गृह्णन्ति |
| क्रीणाति buys | क्रीणीतः | क्रीणन्ति |

रिक्तस्थानानि पूरय–

| | | |
|---|---|---|
| करोषि | कुरुथः | ... |
| शृणोषि | ... | ... |
| शक्नोषि | ... | ... |
| प्राप्नोषि | ... | ... |
| जानासि | जानीथः | ... |
| गृह्णासि | ... | ... |
| क्रीणासि | ... | ... |

| | | |
|---|---|---|
| ... | कुर्वः | ... |
| शृणोमि | ... | ... |
| ... | शक्नुवः | ... |
| प्राप्नोमि | ... | ... |
| ... | जानीवः | ... |
| गृह्णामि | ... | ... |
| क्रीणामि | ... | ... |

## चतुर्थालापः

सुप्रभातं विष्णो !
सुप्रभातम् ! अये ! रमेश !! आगच्छ, अभ्यन्तरम् आगच्छ। उपविश। का वार्ता ? अपि सर्वं कुशलम् ?
आम्, सर्वं कुशलम् ?

बहुदिनेभ्यः परं पश्यामि त्वाम्। कदा आगतः ?
ह्यः रात्रौ।

ह्यः रात्रौ ! कतिवादने ?
द्वादशवादने।

कुत्र वससि ?
भोजनिलये।

प्रातराशः कृतः ?
न हि। त्वया कृतः ?
न हि।

तर्हि आगच्छ, सह करिष्यावः। आनन्दः भविष्यति।
अत्र निकटे कुत्रापि उपाहारगृहम् अस्ति ?
आम्, अस्ति।

तर्हि आगच्छ। क्षुधितः अहम्। उदरपूजा प्रथमं कर्तव्या।
आम्, आम्, अवश्यम्। तिष्ठ तावत्। इदं वार्तापत्रं पठ। एष आयामि शीघ्रम्।

सुष्ठु, विलम्बं मा कुरु। शीघ्रम् आगच्छ।
एष आयामि अविलम्बम्।

(आगत्य) आगतोऽस्मि। चल, उपाहारगृहं गच्छाव।
अस्तु, प्रातराशे त्वं किं किं खादसि ?
रोटिकाम्, कादलं खादामि दुग्धं च पिबामि।

मध्याह्ने भोजनं कदा करोषि ?
प्रायः पादोन-द्वादशवादने।

मध्याह्ने किं खादसि ?
मध्याह्ने भक्तम्, तेमनम्, दधि सितां च खादामि।

रात्रिभोजनं कदा करोषि ?
सपाद-अष्टवादने।

रात्रौ किं खादसि ?

रात्रौ रोटिकाम्, तेमनं खादामि दुग्धं च पिबामि ।

आमिषं न खादसि ?

न ।

किं पूर्णतया त्यक्तम् ?

आम् ।

किमर्थम् ?

आमिषभोजनेन आमिषचेतना अस्माकम् अन्तरं प्रविशति ।

अपि श्रीमाता आमिषभोजनं निषेधति ?

श्रीमाता प्रत्येकखाद्यस्य गुणदोषान् कथयति । सा कमपि दृढनियमं न करोति ।

किमर्थम् ?

यतो हि तस्याः योगः सर्वेषाम् अर्थे । यदा योगसाधनया चेतना परिवर्तते तदा जनः स्वयमेव जानाति किं साधु, किम् असाधु इति ।

अस्माकं ग्रामस्य कोऽपि जनः मद्यम्, गञ्जा, भङ्गा, धूमवर्ती, वीटिः इत्येषां सेवनं करोति । किं तत् साधु ? नैव, अतीव असाधु ।

एषां मद्यादीनां सेवनेन एकाग्रता वर्धते इति सः कथयति । नैव, सा एकाग्रता न स्वाभाविकी । इमानि मद्यादीनि

नाडीक्षयं कुर्वन्ति, स्वास्थ्यं नाशयन्ति, रोगान् उत्पादयन्ति, अस्माकं जीवनं दुःखमयं कुर्वन्ति ।

अस्माकं जीवनस्य लक्ष्यं किम् ?
अस्माकं जीवनस्य एकमेव लक्ष्यम् – भगवतः उपलब्धिः, शरीरे, प्राणे मनसि च तस्य प्रकाशनम् ।

अनुगृहीतोऽस्मि, धन्यवादाः ।

### अभ्यासाः

१. अधोलिखित-शब्दानाम् अन्ते 'आगच्छ' इति क्रियापदं व्यवहर –

अभ्यन्तरम्, शीघ्रम्, अविलम्बम्, सत्वरम्, मन्दं मन्दम्, सावधानम् । यथा – अभ्यन्तरम् आगच्छ । शीघ्रम् आगच्छ ।

अद्य, श्वः, परश्वः ।

अधुना न, परम्; अद्य न, श्वः; श्वः न, परश्वः । यथा – अधुना न आगच्छ, परम् आगच्छ ।

सोमवारे, मङ्गलवारे, बुधवारे, गुरुवारे, शुक्रवारे, शनिवारे, रविवारे; सोमवारे न, मङ्गलवारे; मङ्गलवारे न, बुधवारे ।

एकवादने, द्विवादने, त्रिवादने, चतुर्वादने, पञ्चवादने, षड्वादने, सप्तवादने, अष्टवादने, नववादने, दशवादने, एकादश-वादने, द्वादशवादने ।

प्रातः / प्रातःकाले / प्रभाते, सायम् / सायङ्काले / सन्ध्यासमये, मध्याह्ने, अपराह्णे, रात्रौ; प्रातः न, मध्याह्ने; मध्याह्ने न, सायम्।

पञ्चाधिक-एकवादने, दशाधिक-एकवादने, सपाद-एकवादने, विंशत्यधिक-एकवादने, सार्ध-एकवादने, पञ्चत्रिंशत्-अधिक-एकवादने, चत्वारिंशत्-अधिक-एकवादने, पादोन-द्विवादने, दशोन-द्विवादने, पञ्चोन-द्विवादने ।

एकवादनात् परम्, एकवादनात् पूर्वं न; सोमवारात् परम्, सोमवारात् पूर्वं न; सप्ताहात्/मासात्/वर्षात् परम्, दिनद्वयात् परम्, त्रिदिनेभ्यः/चतुर्दिनेभ्यः/पञ्चदिनेभ्यः/षड्दिनेभ्यः परम् ।

कलाद्वयात् / त्रिकलाभ्यः / चतुःकलाभ्यः/पञ्चकलाभ्यः / षट्-कलाभ्यः / सप्तकलाभ्यः / अष्टकलाभ्यः / नवकलाभ्यः / दशकलाभ्यः परम् ।

अस्मिन् सप्ताहे/मासे/वर्षे न, आगामि-सप्ताहे/-मासे/-वर्षे ।

२. विपरीतशब्दाः –

| | | | | | |
|---|---|---|---|---|---|
| आगच्छ | come | गच्छ । | आनय | bring | नय । |
| देहि | give | गृहाण । | उपविश | sit | उत्तिष्ठ । |
| धर | hold | मुञ्च । | उद्घाटय | open | संवर । |

# पञ्चमालापः

अयि बालाः, किं कुरुथ तत्र ? आगच्छत, शृणुत । श्वः उत्सवदिनम् । बहुकार्याणि सन्ति । सहायतां कुरुत तावत् ।

आम्, आम्, सज्जाः वयम् । कथ्यताम् ।

तर्हि प्रत्येकं बालः एकैकं कार्यं पूर्णं कुर्यात् । तेन अहम् आश्वस्तः भविष्यामि । अपि सम्मतम् ?

आम्, आम्, सहर्षम् ।

यूयं सत्यं साधुबालकाः, मातुः प्रियबालकाः, आज्ञापालकाः । युष्माकं सहयोगेन किमपि अशक्यं न स्यात् । अस्तु, आनन्द, शृणु, त्वं तु वसन्तस्य उद्यानं जानासि । श्वः प्रातः उत्थाय तत्र गच्छ । ततः विविधानि मनोहराणि पुष्पाणि आनय । चम्पकम्, पद्मम्, जवाम्, पाटलम्, शेफालिकाम्, मालतीम्, यूथीम्, कर्णिकारम्, कुरुबकम्, नागकेसरम्, बकुलम् इत्यादीनि पुष्पाणि आनय । राजेश, त्वं श्वः प्रातः 'नन्द'गोशालां गत्वा दशप्रस्थमितं गोदुग्धम् आनय । सुस्वादु पायसं करिष्यामः । लड्डुकाः तु निर्मिताः अद्य । हरे, त्वम् अधुनैव विपणिं गच्छ । इमानि चत्वारिंशतं रूप्यकाणि गृहाण । साधुफलानि आनय—अभिनवानि, उत्तमानि, सुपक्वानि । सम्यक् पश्य । अल्पमूल्येन रसहीनं पूतिफलं मा क्रीणीहि । तेन लाभापेक्षया हानिः अधिका । भोजनेन तृप्तिः अपि न भवति । तृप्तिं विना भोजनम् अस्वास्थ्यकरम् । अवगतम् ? तत्र अल्पमूल्येन प्रलोभितः छलितश्च मा भव ।

न हि। अहं सम्यक् दृष्ट्वा आनेष्यामि।

साधु। गच्छ। प्रसेवद्वयं गृहाण। पञ्च नारिकेलानि आनय—न अतिलघूनि, किन्तु मध्यमानि। सेवं नारङ्गं च दशशः आनय। केशव, त्वमपि तेन सह गच्छ। बहूनि वस्तूनि आनेतव्यानि। तस्य असुविधा भवेत्। सितापि पर्याप्ता नास्ति। तां पञ्चप्रस्थमिताम्, काजूतकं प्रस्थपादम्, एला-लवङ्गयोः प्रत्येकं पञ्चविंशति-धान्यसितम् आनय। मन्ये, धनं पर्याप्तं न भवेत्। गोहे तु पञ्चाशद्-रूप्यपत्रम् एकमेव अवशिष्टम्। तद् गृहाण। अयि बालौ, क्षणं तिष्ठतम्। तैलम् अस्ति न वा इति दृष्ट्वा एष आयामि। (आगत्य) सर्षपतैलम्, नारिकेलतैलं समाप्तप्रायम्। प्रत्येकम् अर्धप्रस्थमितम् आनयतम्। वनस्पति-घृतमपि प्रस्थमितम् आनयतम्। अस्तु, अधुना गच्छतम्। आम्, पश्यतम्, यदि धनाभावः भवेत् तर्हि नारिकेलतैलं न आनेतव्यम्। दिनद्वयात् परं क्रेष्यामः। (तौ गतौ।) हरे हरे, गृहस्थस्य अभावानां कुत्र अन्तः!

## अभ्यासः

सः/सा/अयं बालकः/इयं बालिका/भवान्/भवती गच्छतु।
तौ/ते/इमौ बालकौ/इमे बालिके/भवन्तौ/भवत्यौ गच्छताम्।
ते/ताः/इमे बालकाः/इमाः बालिकाः/भवन्तः/भवत्यः गच्छन्तु।

त्वम् आगच्छ। युवाम् आगच्छतम्। यूयम् आगच्छत।
त्वं गच्छ। ... ... ... ...

| | | | | | |
|---|---|---|---|---|---|
| त्वं | पठ । | ... | ... | ... | ... |
| त्वं | पश्य । | ... | ... | ... | ... |

शृणु, कुरु, वद, खाद, लिख, खेल, धाव, धर, मुञ्च, उपविश, उत्तिष्ठ, उद्घाटय, संवर, नय, आनय, तिष्ठ, चल, दर्शय, पृच्छ, श्रावय, कथय इति एषां क्रियापदानां वाक्येषु प्रयोगं कुरु । तद्यथा – त्वं शृणु, युवां शृणुतम्, यूयं शृणुत ।

रिक्तस्थानं पूरय –

| | | | | | | |
|---|---|---|---|---|---|---|
| त्वं | पश्य । | सः | पश्यतु । | भवती | अपि | पश्यतु । |
| त्वं | गच्छ । | ... | ... | ... | ... | ... |
| त्वं | पठ । | ... | ... | ... | ... | ... |
| त्वं | वद । | ... | ... | ... | ... | ... |
| त्वं | लिख । | ... | ... | ... | ... | ... |

स्मर –

| | | | | | |
|---|---|---|---|---|---|
| त्वं | स्वपिहि । | युवां | स्वपितम् । | यूयं | स्वपित । |
| त्वं | प्राप्नुहि । | युवां | प्राप्नुतम् । | यूयं | प्राप्नुत । |
| त्वं | जानीहि । | युवां | जानीतम् । | यूयं | जानीत । |
| त्वं | क्रीणीहि । | युवां | क्रीणीतम् । | यूयं | क्रीणीत । |
| त्वं | गृहाण । | युवां | गृह्णीतम् । | यूयं | गृह्णीत । |
| त्वं | देहि । | युवां | दत्तम् । | यूयं | दत्त । |
| सः | प्राप्नोतु । | तौ | प्राप्नुताम् । | ते | प्राप्नुवन्तु । |
| सः | करोतु । | तौ | कुरुताम् । | ते | कुर्वन्तु । |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सः | शृणोतु | । | तौ | शृणुताम् | । | ते | शृण्वन्तु | । |
| सः | गृह्णातु | । | तौ | गृह्णीताम् | । | ते | गृह्णन्तु | । |
| सः | क्रीणातु | । | तौ | क्रीणीताम् | । | ते | क्रीणन्तु | । |
| सः | जानातु | । | तौ | जानीताम् | । | ते | जानन्तु | । |
| सः | स्वपितु | । | तौ | स्वपिताम् | । | ते | स्वपन्तु | । |
| सः | ददातु | । | तौ | दत्ताम् | । | ते | ददतु | । |

विपरीतशब्दाः –

ददाति गृह्णाति। बध्नाति मुञ्चति। लिखति मार्जयति।
सृजति संहरति। पालयति नाशयति। हृष्यति शोचति।
भरति रिणक्ति/रेचति। धरति मुञ्चति। गिलति वमति।
निगिलति उद्वमति। शुष्यति क्लिद्यति। पतति उत्पतति।
आविर्भवति तिरोभवति। प्रकटति लुक्कायते।
उच्छ्वसिति निःश्वसिति। रोपयति उत्पाटयति/उन्मूलयति।
ऊनयति वर्धयति। फुल्लति/विकसति म्लायति/शीर्यते।
सङ्कुचति प्रसरति। योजयति वियोजयति।
तापयति/उष्णयति शीतयति। स्वच्छयति मलिनयति।
स्वीकरोति/अङ्गीकरोति निराकरोति/प्रत्याख्याति।
तिष्ठति चलति/गच्छति। स्थापयति चालयति/गमयति।

हसति क्रन्दति। हासयति क्रन्दयति।
कुप्यति प्रसीदति। कोपयति प्रसादयति।
जायते म्रियते। जनयति मारयति।
प्रविशति निर्गच्छति। प्रवेशयति निर्गमयति।

# षष्ठालापः

राजेश, उत्तिष्ठ। (सः उत्तिष्ठति।) अपि त्वया गृहाभ्यासः कृतः ?

न हि, आर्य !

किमर्थं न कृतः ?

प्रश्नः न अवबुद्धः।

तर्हि तत्कालं पृष्ट्वा बोद्धव्यः। पुनः एवं मा कुरु। यदि किमपि न बोधसि, तत्क्षणम् एव पृच्छ। अवगतम् ?

आम्, आर्य !

प्रवेशं प्रार्थये आर्य !

आगच्छ। घण्टा तु बहुकालपूर्वं वादिता। त्वम् अधुना आयासि गजराज इव !

क्षम्यताम् आर्य, पुनः एवं न विलम्बिष्ये।

साधु। आसने उपविश। शृणु, आदर्शः बालकः कदापि न विलम्बते। साधुबालकाः यूयम्। अस्तु, स्योतात् पुस्तकं निष्कासयत।

आर्य, पुस्तकं विस्मृतं मम। प्रमादेन अन्यत् पुस्तकम् आनीतम्।

अपि अङ्कनी/लेखनी/सञ्चिका आनीता ?

आम्, आर्य !

तर्हि रमेशस्य पार्श्वे उपविश। रमेश, स्वपुस्तकं मध्ये स्थापय।

तथा, आर्यं।

राजेश, चापलं मा कुरु। सावधानं शृणु। अन्यथा बहिर्गच्छ। किमर्थं तस्य पुस्तकं कर्षसि ? किमर्थम् अङ्गुल्या लेखाधारं विकरोषि ? उत्तिष्ठ, शीघ्रं गत्वा कार्यालयात् खटीम् आनय। इयं खटी समाप्तप्राया। शृणु, द्वे आनय। अपि जानीथ यूयम् इमं श्लोकम् ?

आम्, जानामि/न जानामि।

ये जानन्ति ते हस्तम् उत्थापयन्तु। सर्वे एकसार्थं मा वदत। एकैकं वदत। अहं यं पृच्छामि स एव वदतु, न अन्यः। अहं क्रमेण पृच्छामि। यूयं स्ववारं प्रतीक्षध्वम्। किमर्थं त्वया तस्य वारे उक्तम् ? इतः परं यः अन्यस्य वारे वदिष्यति तम् अहं नैव प्रक्ष्यामि। द्वितीयवारं यदि सः पुनः इत्थं वदेत् तर्हि तं श्रेण्याः बहिष्करिष्यामि। यदाहं श्लोकं पठामि तदा यूयं सर्वे तूष्णीं शृणुत। कोऽपि मा वदतु। यदा मम पाठः समाप्यते यदा च अहं सङ्केतयामि तदा आवर्तयत। भो धीर, त्वं किम् अधीरो भवसि ? किं चञ्चलायसे ? शान्तो भव। निजवारं प्रतीक्षस्व। किमर्थं तव हस्ते खटी ? देहि मह्यम्। खट्या किं ते प्रयोजनम् ? गीते, तत्र किं करोषि ? संवियुत्केन मा खेल, नष्टं भवेत्। मिते, किं तं ताडयसि ? उत्तिष्ठ। मा ताडय कमपि। दूरं कोणे तिष्ठ। त्वं किम् इच्छसि अञ्जले !

बहिर्गन्तुम् इच्छामि ।
किमर्थम् ?
शौचाय गन्तुकामा/जलं पातुकामा ।
अस्तु, गच्छ ।
आर्य, मम सीसाग्रं भग्नम् ।
कस्यापि सकाशे तेजनम् अस्ति ?
आर्य, मम सकाशे अस्ति किन्तु तत् साधु न तेजति ।
देहि मह्यम् अङ्कनीम् । छुर्या तेजयिष्ये ।
त्वं किमर्थं लेखनीम् उद्घाटयसि ?
मसी समाप्ता ।
किं हस्तेन मसीं भरिष्यसि ?
न हि । द्रप्सकेन भरिष्यामि ।
तव मसीपात्रं कुत्र ?
तत्र धायस्य नीचैः अस्ति ।

त्वं किं जृम्भसे ? रात्रौ न सुप्तम् ? यदा जृम्भसे तदा हस्तेन मुखम् आवृणु । बहिर्गच्छ । मुखं प्रक्षाल्य नासिकां च परिष्कृत्य आगच्छ । सत्यं मलिनः त्वम् । नासिकायां सिङ्घाणं दृश्यते । धावय शीघ्रम् । अधुना श्लोकम् एकसार्थं सस्वरं गायत । किं त्वं पृथक् वदसि ? सर्वैः सह सस्वरं वद । शीघ्रं मा वद । घण्टा वादिता । पुस्तकानि सज्जयत । इमं श्लोकं गृहे कण्ठस्थीकुरुत । आगामिवारे मां श्रावयत ।

## अभ्यासाः

अधोलिखित-शब्दैः वाक्यानि रचयत —

(क) सः करोति, कार्यम्, अत्र, प्रसन्नमनसा, आश्रमे, मया सह, विद्यालये न, बहु, प्रतिदिनम्, मन्दं मन्दं न, शीघ्रं शीघ्रम्, सपाद-अष्टवादनात् सार्ध-एकादशपर्यन्तम्, अत्र केवलं पूर्वाह्णे, अपराह्णे अन्यत्र, कुत्र, यत्र । यथा —

सः कार्यं करोति । सः अत्र कार्यं करोति । सः अत्र प्रसन्नमनसा कार्यं करोति । सः अत्र आश्रमे प्रसन्नमनसा कार्यं करोति । सः अत्र आश्रमे मया सह प्रसन्नमनसा कार्यं करोति । सः विद्यालये कार्यं न करोति । सः बहु कार्यं करोति । सः प्रतिदिनं बहु कार्यं करोति । सः कार्यं मन्दं मन्दं न करोति । सः कार्यं शीघ्रं शीघ्रं करोति । सः सपाद-अष्टवादनात् सार्ध-एकादश-पर्यन्तं कार्यं करोति । सः अत्र केवलं पूर्वाह्णे कार्यं करोति । सः अपराह्णे अन्यत्र कार्यं करोति । सः कुत्र कार्यं करोति ? सः यत्र कार्यं करोति, अहम् अपि तत्र कार्यं करोमि ।

तौ, ते इति इमौ शब्दौ व्यवहृत्य पुनः इमानि वाक्यानि वदत। यथा — तौ कार्यं कुरुतः । तौ अत्र कार्यं कुरुतः । ते कार्यं कुर्वन्ति । ते अत्र कार्यं कुर्वन्ति इत्यादि ।

(ख) अहं पठामि, संस्कृतम्, शुद्धम्, स्पष्टम्, कदापि अशुद्धं न, कदापि अस्पष्टं न, अपि त्वम् । एतैः शब्दैः वाक्यानि रचयित्वा आवाम्, युवाम्, वयम्, यूयम् इति इमान् शब्दान् व्यवहृत्य तानि पुनर्वदत ।

(ग) अहं खादामि, मिष्टान्नम्, अल्पम्, अधिकं न, कदापि एकलः/एकला न, मित्रैः सह, प्रतिदिनं न, केवलं पर्वदिनेषु ।

(घ) त्वम् अहसः, किमर्थम्, ह्यः, वर्गे, उच्चैः, असभ्यवत् ।

(ङ) पश्य, पुरतः, पृष्ठतः, वामतः, दक्षिणतः, उपरि, नीचैः, ऋजु, तिर्यक् ।

रिक्तस्थानानि पूरयत –

सः ह्यः अपठत् । तौ ह्यः अपठताम् । ते ह्यः अपठन् ।
सा ह्यः अगायत् । ...... ... ...... ...
अयं ह्यः अवादयत् । ...... ... ...... ...
त्वम् अपठः । युवाम् अपठतम् । यूयम् अपठत ।
त्वम् अखेलः । ... ... ... ...
त्वम् अधावः । ... ... ... ...
अहम् अपठम् । आवाम् अपठाव । वयम् अपठाम ।
अहम् अवदम् । ... ... ... ...
अहम् अलिखम् । ... ... ... ...
अहं श्वः पठिष्यामि । आवां ... ... वयं ... ...
अहं श्वः करिष्यामि । ... ... ... ... ... ...
सः श्वः गमिष्यति । तौ ... ... ते ... ...
त्वं श्वः प्राप्स्यसि । युवां ... ... यूयं ... ...
अहं परश्वः दास्यामि । ... ... ... ... ... ...
त्वं कदा आगमिष्यसि ? ... ... ... ... ... ...
सः कदा ... ... ... ... ... ... ...

# विविधाभ्यासाः

## सङ्ख्या

एकं स्तोत्रम् । एकः मन्त्रः । एका प्रार्थना ।
एकं पद्यम् । एकः श्लोकः । एका कविता ।
एकं दिनम् । एकः दिवसः । एका तिथिः ।

द्वे नेत्रे । द्वौ कर्णौ । द्वे तारके ।
द्वे नखे । द्वौ पादौ । द्वे पिण्डिके ।
द्वे मित्रे । द्वौ सेवकौ । द्वे सेविके ।

त्रीणि फलानि । त्रयः रसगोलाः । तिस्रः कुण्डलिकाः ।
त्रीणि मित्राणि । त्रयः बान्धवाः । तिस्रः सख्यः ।
चत्वारि युगानि । चत्वारः वेदाः । चतस्रः दिशाः/शक्तयः ।
पञ्च इन्द्रियाणि । पञ्च बाणाः । पञ्च कन्याः ।

(पञ्च इति अतः आरभ्य सङ्ख्यानां लिङ्गभेदः न भवति ।)

षड् रसाः/ऋतवः/रिपवः । षड् मातरः । षड् मुखानि ।
दश अवताराः । दश महाविद्याः/दिशाः । दश रत्नानि ।
विंशतिः पादपाः । विंशतिः कलिकाः । विंशतिः पुष्पाणि ।
त्रिंशत् श्रमिकाः । त्रिंशत् होराः । त्रिंशत् रूप्यकाणि ।
चत्वारिंशत् ग्रन्थाः । चत्वारिंशत् पुस्तिकाः । चत्वारिंशत् पुस्तकानि ।

शतं सरोवराः । शतं पुष्करिण्यः । शतं तटाकानि ।

द्विशतम् / त्रिशतम् / चतुःशतम् / पञ्चशतम् / षट्शतम् / सप्तशतम्/
अष्टशतम् / नवशतम् बान्धवाः / बान्धव्यः / मित्राणि ।

सहस्रम्/अयुतम्/लक्षम्/कोटिः पुरुषाः/स्त्रियः/अपत्यानि ।

| | | | |
|---|---|---|---|
| १ एकम् | षड्विंशतिः | एकपञ्चाशत् | षट्सप्ततिः |
| २ द्वे | सप्तविंशतिः | द्वापञ्चाशत् | सप्तसप्ततिः |
| ३ त्रीणि | अष्टाविंशतिः | त्रयःपञ्चाशत् | अष्टासप्ततिः |
| ४ चत्वारि | ऊनत्रिंशत् | चतुःपञ्चाशत् | ऊनाशीतिः |
| ५ पञ्च | त्रिंशत् | पञ्चपञ्चाशत् | अशीतिः |
| ६ षट् | एकत्रिंशत् | षट्पञ्चाशत् | एकाशीतिः |
| ७ सप्त | द्वात्रिंशत् | सप्तपञ्चाशत् | द्व्यशीतिः |
| ८ अष्ट | त्रयस्त्रिंशत् | अष्टापञ्चाशत् | त्र्यशीतिः |
| ९ नव | चतुस्त्रिंशत् | ऊनषष्टिः | चतुरशीतिः |
| १० दश | पञ्चत्रिंशत् | षष्टिः | पञ्चाशीतिः |
| एकादश | षट्त्रिंशत् | एकषष्टिः | षडशीतिः |
| द्वादश | सप्तत्रिंशत् | द्वाषष्टिः | सप्ताशीतिः |
| त्रयोदश | अष्टात्रिंशत् | त्रयःषष्टिः | अष्टाशीतिः |
| चतुर्दश | ऊनचत्वारिंशत् | चतुःषष्टिः | ऊननवतिः |
| पञ्चदश | चत्वारिंशत् | पञ्चषष्टिः | नवतिः |
| षोडश | एकचत्वारिंशत् | षट्षष्टिः | एकनवतिः |
| सप्तदश | द्वाचत्वारिंशत् | सप्तषष्टिः | द्वानवतिः |
| अष्टादश | त्रयश्चत्वारिंशत् | अष्टाषष्टिः | त्रयोनवतिः |
| ऊनविंशतिः | चतुश्चत्वारिंशत् | ऊनसप्ततिः | चतुर्नवतिः |
| विंशतिः | पञ्चचत्वारिंशत् | सप्ततिः | पञ्चनवतिः |
| एकविंशतिः | षट्चत्वारिंशत् | एकसप्ततिः | षण्णवतिः |
| द्वाविंशतिः | सप्तचत्वारिंशत् | द्वासप्ततिः | सप्तनवतिः |
| त्रयोविंशतिः | अष्टाचत्वारिंशत् | त्रयःसप्ततिः | अष्टानवतिः |
| चतुर्विंशतिः | ऊनपञ्चाशत् | चतुःसप्ततिः | ऊनशतम् |
| पञ्चविंशतिः | पञ्चाशत् | पञ्चसप्ततिः | शतम् |

## रङ्गाः

हंसः श्वेतः । दुग्धं श्वेतम् । सिता श्वेता ।
वकः श्वेतः । हिमं श्वेतम् । सुधा श्वेता ।
रसगोलः धवलः । पुण्डरीकं धवलम् । आमिक्षा धवला ।
शुकः हरितः । पत्रं हरितम् । दूर्वा हरिता ।
नीलः आकाशः । नीलम् उत्पलम् । नीला धमनी ।
रक्तः सङ्केतः । रक्तं रुधिरम् । रक्ता जवा ।
मम केशः कृष्णः । मम छत्रं कृष्णम् । तस्याः वेणी कृष्णा ।
अस्य देहः पीतः । अस्य वसनं पीतम् । इयं हरिद्रा पीता ।
मम ओष्ठः पाटलः । इदं पुष्पं पाटलम् । मम जिह्वा पाटला ।

## अहम्, त्वम्

अहं विद्यार्थी । त्वम् अपि विद्यार्थी ।
अहं त्वां जानामि । त्वं मां जानासि ।
अहं त्वया सह पठामि । त्वं मया सह पठसि ।
अहं तुभ्यं ददामि । त्वं मह्यं ददासि ।
अहं त्वत् प्राप्नोमि । त्वं मत् प्राप्नोषि ।
अहं तव वन्धुः । त्वं मम वन्धुः ।
अहं त्वयि स्निह्यामि । त्वं मयि स्निह्यसि ।

## सः, सा

सः कः ? सा का ?
त्वं तं जानासि ? त्वं तां जानासि ?
अहं तं जानामि । अहं तां न जानामि ।
अहं तेन सह खेलामि । अहं तया सह न खेलामि ।

अहं तस्मै मिष्टिकां ददामि । अहं तस्यै मिष्टिकां न ददामि ।
अहं तस्मात् मिष्टिकां प्राप्नोमि । अहं तस्याः मिष्टिकां न प्राप्नोमि ।
अहं तस्य मित्रम् अस्मि । अहं तस्याः मित्रं नास्मि ।
अहं तस्मिन् स्निह्यामि । अहं तस्यां न स्निह्यामि ।

## अयं वादकः

अयं वादकः अस्ति । अयं वाद्यं वादयति । अहम् इमं वादकं रोचये । अनेन वादकेन सह गायकः गायति । अहम् अपि तेन सह गायामि। अहम् अस्मै वादकाय उपहारं ददामि । अहम् अस्मात् वादकात् वाद्यं शिक्षे । अस्य वादकस्य स्वभावः अतीव भद्रः । अस्मिन् वादके मम स्नेहः अस्ति । हे वादक ! त्वं प्रतिदिनं मां वाद्यं शिक्षय ।

## इयं गायिका

इयं गायिका । इयम् अद्य सायं शास्त्रीय-सङ्गीतं गास्यति । त्वम् इमां गायिकां जानासि ? अनया गायिकया सह तव परिचयः अस्ति ? जनाः अस्यै गायिकायै पुरस्कारान् ददति । अस्याः गायिकायाः परम् अन्या गायिका भजनानि गास्यति । अपि त्वम् अस्याः गायिकायाः नाम जानासि ? सर्वे अस्यां गायिकायां स्निह्यन्ति । हे गायिके ! तव कण्ठः खलु वीणाजयी ।

## इदं कमलम्

इदम् (एकम्) मनोहरं कमलम्/पद्मम् । इमे (द्वे) मनोहरे कमले । इमानि (त्रीणि/चत्वारि/पञ्च...) मनोहराणि कमलानि । अहम् इदम् (एकम्) कमलं ग्रहीतुम् इच्छामि । अहम् इमे (द्वे) कमले ग्रहीतुम् इच्छामि । अहम् इमानि (त्रीणि/चत्वारि/पञ्च...) कमलानि ग्रहीतुम् इच्छामि । अहम् अनेन (एकेन) कमलेन देवं पूजयिष्यामि । अहम् आभ्याम्

(द्वाभ्याम्) कमलाभ्यां देवं पूजयिष्यामि। अहम् एभिः (त्रिभिः/चतुर्भिः/पञ्चभिः...) कमलैः देवं पूजयिष्यामि। अहम् अस्मै (एकस्मै) कमलाय एतावद् दूरम् आगतः। अहम् आभ्यां (द्वाभ्याम्) कमलाभ्याम् एतावद् दूरम् आगतः। अहम् एभ्यः (त्रिभ्यः/चतुर्भ्यः/पञ्चभ्यः...) कमलेभ्यः एतावद् दूरम् आगतः। मधुमक्षिका अस्मात् (एकस्मात्) कमलात् मधु आहरति। मधुमक्षिके आभ्यां (द्वाभ्याम्) कमलाभ्यां मधु आहरतः। मधुमक्षिकाः एभ्यः (त्रिभ्यः/चतुर्भ्यः/पञ्चभ्यः...) कमलेभ्यः मधु आहरन्ति। अस्य (एकस्य) कमलस्य शोभा अनुपमा। अनयोः (द्वयोः) कमलयोः शोभा अनुपमा। एषां (त्रयाणाम्/चतुर्णाम्/पञ्चानाम्...) कमलानां शोभा अनुपमा। अस्मिन् (एकस्मिन्) कमले भ्रमरः उपविष्टः। अनयोः (द्वयोः) कमलयोः भ्रमरौ उपविष्टौ। एषु (त्रिषु/चतुर्षु/पञ्चसु...) कमलेषु भ्रमराः उपविष्टाः। हे कमल! धन्यं तव जीवितं यतो हि त्वयि कमला (लक्ष्मीः) वसति। हे श्वेतकमल-नीलकमले! युवाम् उच्चतम-चैतन्यस्य प्रतीके, सर्वाङ्गपूर्ण-सौन्दर्यस्य प्रतीके। हे कमलानि! यूयं सत्य-शिव-सुन्दरस्य सङ्कीर्तनाय कविभ्यः कमनीय-प्रेरणां प्रदत्त।

## कारकसङ्गता क्रियावली

### (१)

अध्यापकः अध्यापयति। शिक्षकः शिक्षयति। नटः नटति।
अभिनेता अभिनयति। नर्तकः/की नृत्यति। भक्तः भजति।
तापसः तपस्यति/तपः तपति। गायकः गायति। वादकः वादयति।
जीवः जीवति। परिव्राजकः परिव्रजति। पर्यटकः पर्यटति।
निद्रालुः निद्राति। क्रोधी क्रुध्यति। लोभी लुभ्यति। मूढः मुह्यति।
मत्तः माद्यति। विलासी विलसति। कृषकः कृषति। श्रमिकः श्राम्यति।
जल्पाकः जल्पति। दाता ददाति। ग्रहीता गृह्णाति। भक्षकः भक्षयति।

चोरः चोरयति । सीवकः सीव्यति । तपनः तपति । कविः कवते ।
सेवकः सेवते । भिक्षुः भिक्षते । योद्धा युध्यते । कामी कामयते ।
अर्थी अर्थयते । मन्त्री मन्त्रयते । प्राणी प्राणिति । श्रोता शृणोति ।
वक्ता वक्ति/वदति/अभिभाषते । द्रष्टा पश्यति ।
पाचकः/सूदः पचति/रन्धयति । चित्रकारः चित्रयति/आलिखति ।
मालाकारः गुम्फति/ग्रथ्नाति । मुनिः मनुते/ध्यायति । स्वामी आदिशति ।
गुरुः उपदिशति/अनुशास्ति । शिष्यः पृच्छति/अनुशीलयति ।
क्षुधितः खादति । तृषितः पिबति । श्रान्तः/क्लान्तः विश्राम्यति/स्वपिति ।
विपन्नः विलपति । भीरुः/भयालुः बिभेति । मल्लः नियुध्यते ।
भटः/शूरः युध्यते । शिशुः क्रन्दति । बालकः खेलति/चीत्करोति ।
छात्रः पठति/शिक्षते । काकः कायति । वृष्टिः/उल्का पतति ।
वज्रः स्फूर्जति । तडित् विद्योतते । मेघः वर्षति । विद्युत् स्तनति ।
सिंहः गर्जति/क्ष्वेडति । हस्ती बृंहति । अश्वः/घोटकः ह्रेषते ।
गौः रम्भते । महिषः नर्दति । शृगालः क्रोशति । रासभः रासते ।
वानरः किलकिलायते । शूकरः घुर्घुरायते । दर्दुरः टर्टरायते ।
मयूरः केकायते । शफरी/चटका फर्फरायते ।
तारकाः झलमलायन्ते/स्फुरन्ति । ढक्का डण्ढनायते । घण्टिका टण्टनायते ।
डमरुः डमड्डमायते । घण्टा स्वनति/वाद्यते । वीणा क्वणति ।
फलं परिणमति/लम्बते/पतति । पत्रं ह्वलति/कम्पते ।
पुष्पं फुल्लति/विकसति । वृक्षः फलति । बीजम् अङ्कुरति/प्ररोहति ।
अङ्कुरः वर्धते । पादपः रोहति । भ्रमरः गुञ्जति । पक्षी कूजति ।
लुण्ठाकः लुण्ठति । धनुर्धरः विध्यति । गदाधरः प्रहरति ।
शोध्यवाचकः वाचयति । कालः गच्छति/व्यतीयते/व्यतियाति ।
रात्रिः प्रभाति । यवनिका उत्तिष्ठति/पतति । तिरस्करिणी लम्बते ।
वागोलः श्वयति/स्फुटति । हिमं द्रवति/गलति । संगणित्रं संगणयति ।

निर्माणी निर्माति। पेषणी पिनष्टि। घटः लुठति/स्फुटति।
रोगः पीडयति। निन्दकः निन्दति। सेना आक्रामति।
रक्तं सञ्चरति/पतति/क्षरति/स्रवति। श्वासः चलति।
व्यायामिकः व्यायच्छति। ब्रह्मा सृजति। विष्णुः पालयति।
रुद्रः संहरति। महेश्वरी विराजते। महाकाली युध्यते।
महालक्ष्मीः शोभते। महासरस्वती संसाधयति। सूर्यः प्रकाशते/उदयति।
चन्द्रः भाति। चन्द्रकला/ज्वरः वर्धते/क्षीयते। वायुः/पवनः/झञ्झा वाति।
नदी वहति। पर्वतः तिष्ठति। वानरः प्लवते/दोलायते/लम्फति।
सर्पः फूत्करोति/सर्पति/दशति। पक्षी उड्डयते। कुक्कुरः भषति/बुक्कति।
दीपः ज्वलति। अग्निः दहति। वीजनं भ्रमति/चलति। हृदयं स्पन्दते।
मस्तकं घूर्णते। शिरः भ्राम्यति। उदरं गुडगुडायते।

(२)

शब्दं शृणु। रूपं पश्य। गन्धं जिघ्र। अन्नं खाद।
जलम्/दुग्धम्/पानकं पिब। हस्तौ/पादौ/मुखं प्रक्षालय/धावय।
दन्तान् मार्जय। रोटीम्/रोटिकां वेल्लय। वेसवारं पेषय/पिण्ढि।
तण्डुलान्/रोटिकां पच। भक्तम्/तेमनं रन्धय। जलं देहि/आनय।
लवणम्/हरिद्राम्/मरिचम्/वेसवारं पातय/निक्षिप। घृतं द्रावय।
आम्रं चूष। मधु लीढि। भोजनं कुरु। प्रातःकृत्यं निर्वर्तय।
धौतम्/शाटीम्/शाटिकाम्/वस्त्रं धारय/परिधेहि/अवमुञ्च/क्षालय।
करवस्त्रं भुज। मेखलाम्/सन्धरं सञ्जय/शिथिलय।
दीपं ज्वालय/निर्वापय। वीजनं चालय/रोधय/रुन्द्धि। (लेख)फलकं मार्जय।
कक्षम्/गृहं परिष्कुरु। उपधिम्/खटीम् आनय। वेलां पश्य।
घण्टां वादय। आपणम्/धायम्/पुस्तकम्/वातायनम्/द्वारम् उद्घाटय।
मन्त्रं जप। कमपि न शप। श्लोकं पठ। शास्त्रम् अधीष्व।

नेत्रे निमीलय/उन्मीलय। ईश्वरं ध्याय। गुरुम्/देवं नम/प्रणम।
चरणौ स्पृश। मोक्षं लभस्व। औषधम्/पथ्यं सेवस्व। भिक्षाम्/धनं देहि।
मूर्ति पूजय। पुष्पम्/धूपम् आनय। मालां गुम्फ/रचय/ग्रथान।
नैवेद्यं निवेदय। घण्टाम्/वादित्रम्/तालिकां वादय। शङ्खं धम/वादय।
वरं वरय/वृणु। आज्ञां पालय। प्रसादं वितर। इष्टदेवताम् उपास्स्व/स्मर।
गुरुजनम् अभिवादय/सम्मानय/पूजय। प्रश्नं पृच्छ। उत्तरं देहि।
वाक्यं रचय/वद। कथां श्रावय। गीतं गाय। तालकेन पिधेहि (द्वारम्)।
तालकम् उद्घाटय। द्वारम्/कपाटं कीलय/तालकय/अर्गलय।
स्वजम्/कुड्मं योजय। अङ्कनीं तेजय। मसीं भर।
आस्तरणम्/कटं प्रसारय/वेष्टय। मुखं व्यादेहि/उद्घाटय।
मिष्टिकां (मुखे) निवेशय/पूरय। पत्रम् उद्घाटय/श्लेषय/पातय।
प्रेषमुद्रां श्लेषय/विश्लेषय। गृहम्/क्रीडाक्षेत्रम्/विद्यालयम्/
कार्यालयम्/आपणम्/मन्दिरम्/अधिकोषम्/प्रेषालयं गच्छ।
भक्तम्/तेमनम्/भर्जम्/शाकम्/दालिम्/दधि/सिताम्/सन्धितं खाद।
लाजाः/भृष्टान्नम्/चणकान्/इक्षुदण्डं चर्व। क्षुधाम्/तृषां शमय।
शय्यां त्यज। ईश्वरं भज। क्षौरं कुरु, भद्राकुरु। मस्तकं मुण्डय।
मस्तकम्/श्मश्रु भद्राकुरु। केशान् सज्जय/अलङ्कुरु, केशपाशं प्रसाधय।
पुष्पाणि सज्जय। उद्यानं गच्छ। पादपान् सिञ्च।
शाखां छिन्धि/कम्पय/धुव। काष्ठम्/वंशं दारय। अवस्करं क्षिप।
मलं विसृज। बाणं मुञ्च/संधेहि। लक्ष्यं विध्य। भारं वह/उत्तोलय।
वित्तम्/धनम् अर्जय। सुखेन कालं क्षपय/नय। राष्ट्रपतिं निर्वाचय।
परिकौतुकं पश्य। नदीं तर। अपराधं क्षमापय।
चोरं धर/वन्दीकुरु/दण्डय। गृहं निर्माहि। यन्त्रं चालय।
मार्गं दर्शय। सोपानम्/वाहनम् आरोह। (सोपानात्/वाहनात् अवरोह।)
अवसरं प्रतीक्षस्व/उपयुङ्क्ष्व। विपत्तिं सम्मुखीकुरु।

आत्मानं विद्धि/जानीहि/साक्षात्कुरु । शरणं गच्छ/प्रपद्यस्व । सत्यं वद ।
संस्कृतम् अध्यापय/शिक्षय/पाठय । पत्रिकां सम्पादय/प्रकाशय ।
विश्वकोषं परामृश । गुण्यं गुणय । भाज्यं भाजय । योज्यं योजय ।

(३)

मुखेन खादति/वदति/हसति/फूत्करोति ।
हस्तेन स्पृशति/गृह्णाति/लिखति/धरति/चपेटयति/उत्थापयति ।
हस्ताभ्यां प्रणमति/नुदति/कर्षति । नेत्रेण पश्यति । नेत्राभ्यां पश्यति ।
कर्णेन शृणोति । कर्णाभ्यां शृणोति । चरणेन/पादेन चलति ।
चरणाभ्याम्/पादाभ्यां चलति । मस्तकेन नमति ।
पृष्ठेन/स्कन्धेन/मस्तकेन/शिरसा वहति । अङ्गुष्ठेन संपीडयति ।
तर्जन्या सङ्केतयति । चमसेन खादति । जिह्वया स्वदते/आस्वादयति ।
नासिकया जिघ्रति/श्वसिति/निःश्वसिति । अङ्गुल्या स्पृशति/कण्डूयते ।
अङ्गुलिभिः स्पृशति/कण्डूयते । दन्तैः चर्वति/दशति ।
मनसा चिन्तयति/मन्यते/मनुते । बुद्ध्या बोधति ।
हृदयेन अभीप्सति/स्पृहयति/अनुभवति/कामयते । अन्तरात्मना श्रद्दधाति ।
शरीरेण/देहेन चेष्टते । प्राणेन उत्सहते । तेजसा प्रकाशते/भ्राजते ।
प्रभावेण अभिभवति । पराक्रमेण पराभवति । शीलेन शोभते/शालते ।
पाद्येन सत्करोति । जलेन धावयति ।
मुष्ट्या/घनेन/दण्डेन प्रहरति/ताडयति । खड्गेन छिनत्ति ।
कर्तन्या कृन्तति । मुशलेन कुट्टति । लेखन्या लिखति ।
तूलिकया चित्रयति । कूर्चेन लिम्पति । कुञ्च्या उद्घाटयति ।
खनित्रेण खनति । हलेन कृषति । दात्रेण द्यति/खण्डयति ।
लवित्रेण लुनाति । सेचनकेन सिञ्चति ।
क्षुरेण भद्राकरोति/मुण्डयति । बाणेन/कण्टकेन विध्यति ।

रज्ज्वा/शृङ्खलया बध्नाति । उपानहा ताडयति । कन्दुकेन खेलति ।
अङ्कुशकेन लम्बते । सम्मार्जन्या/मार्जनेन मार्जयति । रेखकेण रेखयति ।
उद्घर्षणेन उद्घर्षयति । गुणकेन गुणयति । भाजकेन भाजयति ।
सूच्या सीव्यति । मार्गेण गच्छति । नौकया तरति (नदीम्) ।
सूत्रेण गुम्फति (मालाम्) । श्लेषेण श्लेषयति । यन्त्रेण नियन्त्रयति ।
पक्षाभ्याम् उड्डयते । पात्रेण पिबति ।
कङ्कतेन सज्जयति/प्रसाधयति (केशान्) ।
अभ्यासेन/उद्योगेन सिद्ध्यति । शोकेन आकुलीभवति ।
अभावेन ग्रस्यते/ग्रस्तः/ग्रस्ता । यानेन याति । वेगेन धावति ।
सत्येन शपति । मनोयोगेन/एकाग्रचित्तेन शृणोति ।

(४)

जलाय तृष्यति । अन्नाय क्षुध्यति । भिक्षायै अटति । विद्यायै अधीते ।
ज्ञानाय शिक्षते/पृच्छति । स्मरणाय आवर्तयति/रटति ।
परीक्षायै सज्जयति । बलाय व्यायच्छति । स्पर्धायै/कौशलाय अभ्यस्यति ।
सफलतायै/सिद्धये उद्युङ्क्ते/उद्यच्छते । जयाय युध्यते ।
जीवनाय/वर्तनाय/आजीविकायै श्राम्यति । युद्धाय/स्पर्धायै आह्वयते ।
आह्वानाय क्रोशति । आत्मरक्षायै पलायते । प्रमोदाय/विनोदाय खेलति ।
उपहासाय आक्षिपति । प्रेक्षकेभ्यः/दर्शकेभ्यः प्रदर्शयति ।
आनन्दाय जीवति । व्रताय उपवसति । परिष्काराय/शुद्ध्यै मार्जयति ।

(५)

बन्धनात्/सङ्कटात् मुच्यते/मोचयति ।
भयात् पलायते/चीत्करोति/विवर्णायते/कम्पते/त्रायते ।
मार्गात्/चरित्रात्/लक्ष्यात् भ्रंशते । पदात् च्यवते । अवसरात् वञ्च्यते ।

संसारात् विरज्यते । दण्डात् बिभेति । गुरोः शिक्षते ।
अज्ञानात् मुह्यति/दुःखीभवति । विरहात् ताम्यति । देशात् निर्वासयति ।
दैवात् लभते । गृहात्/कक्षात् निर्गच्छति । वृक्षात् पत्रं/फलं पतति ।
मस्तकात् टोपी/अश्वात् अश्ववारः पतति । लोभात् पापं प्रजायते ।
हिमालयात् गङ्गा प्रवहति । भूम्याः/क्षेत्रात् सस्यम् उत्पद्यते ।
जिह्वायाः लाला निःसरति । व्रणात् पूयः निःसरति ।
नासिकायाः सिङ्घाणं निःसरति । विलात् सर्पः निर्गच्छति ।
बीजात् अङ्कुरः रोहति । शीतात् हिमं भवति ।

(६)

मनसः ज्ञानम् । प्राणस्य वलम्/उत्साहः । शरीरस्य सौन्दर्यम्/सामञ्जस्यम् ।
अन्तरात्मनः प्रेम । हिमालयस्य तुङ्गता । हिमस्य शीतलता ।
इन्द्रधनुषः वर्णाः/रङ्गाः । पुष्पस्य सुगन्धः/सौरभम् ।
हट्टस्य/विपणेः शब्दः/कोलाहलः । वस्तूनाम् आकारः ।
अश्वस्य/यानस्य वेगः । भोजनस्य स्वादः । भीष्मस्य प्रतिज्ञा ।
भगीरथस्य प्रयत्नः । सीतायाः सतीत्वम् । रामस्य वीरत्वम् ।
रावणस्य दुःशीलम् । उष्ट्रस्य ग्रीवा । हस्तिनः देहः ।
आकाशस्य नीलिमा । गुरोः महिमा/कृपा/आशिषः ।

(७)

गृहे/नीडे/विले वसति । आसने/उपधौ/भूमौ उपविशति ।
खट्वायाम्/शय्यायाम्/पर्यङ्के शेते/स्वपिति । स्थाले खादति ।
दोलायाम्/हिन्दोले दोलायते ।
नद्याम्/समुद्रे/तरणकुण्डे तरति/वुडति/निमज्जति । आकाशे उड्डयते ।
मार्गे/भूमौ चलति/पतति । क्रीडाक्षेत्रे क्रीडति/खेलति ।
युद्धक्षेत्रे युध्यते । अक्षवाटे नियुध्यते । क्षेत्रे वपति/कृषति । पत्रे लिखति ।

## तुम्प्रत्ययः

अहं गच्छामि । अहं विद्यालयं गच्छामि । अहं पठितुं विद्यालयं गच्छामि । त्वं किं कर्तुं विद्यालयं गच्छसि ? अहं पठितुं विद्यालयं गच्छामि ।

त्वं कुत्र गच्छसि ? अहं भोजनालयं गच्छामि । त्वं किं कर्तुं भोजनालयं गच्छसि ? अहं खादितुं भोजनालयं गच्छामि ।

सः/सा/अयं बालकः/इयं बालिका कुत्र गच्छति ? सः/सा/अयं बालकः/इयं बालिका क्रीडाक्षेत्रं गच्छति । सः/सा/अयं बालकः/इयं बालिका किं कर्तुं क्रीडाक्षेत्रं गच्छति ? सः/सा/अयं बालकः/इयं बालिका खेलितुं क्रीडाक्षेत्रं गच्छति ।

भवान्/भवती कुत्र गच्छति ? अपि भवान्/भवती तरणकुण्डं गच्छति ? आम्, अहं तरणकुण्डं गच्छामि । भवान्/भवती किं कर्तुं तरणकुण्डं गच्छति ? अहं तरितुं तरणकुण्डं गच्छामि ।

छात्राः पठितुं विद्यालयं गच्छन्ति । शिक्षकाः पाठयितुं विद्यालयं गच्छन्ति । साधकाः ध्यातुं (ध्यानं कर्तुम्) समाधौ प्रणन्तुं (प्रणामं कर्तुं) च आश्रमं गच्छन्ति । अहं धनम् आनेतुम् अधिकोषं गच्छामि । स कार्यं कर्तुम् अधिकोषं गच्छति । सा पत्रं पातयितुं प्रेषालयं गच्छति । इमे बालकाः अधुना कुत्रापि गन्तुं किमपि कर्तुं वा न इच्छन्ति । इमे संस्कृते कथां श्रोतुम् इच्छन्ति ।

सा स्नातुं स्नानागारं गच्छति । अहं जलं पातुम् इच्छामि । स मदर्थं जलम् आनेतुं गच्छति । कृपणः दातुं न इच्छति । अहं

संस्कृतं सम्यक् ज्ञातुम् इच्छामि । अहं संस्कृतं शुद्धं लेखितुम् इच्छामि । अहं संस्कृतं शुद्धं वक्तुम् इच्छामि । अयं वृद्धः सुखेन उपवेष्टुम् उत्थातुं च न पारयति/शक्नोति । तथापि स कदापि मर्तुं न इच्छति । स सदा जीवितुम् इच्छति । अहमत्र दिनद्वयम् अधिकं स्थातुम् इच्छामि । त्वं मां किमपि प्रष्टुम् अर्हसि । संसारे कः सुखी भवितुं न इच्छति ? अहं श्वः आश्रमे प्रातः षड्वादने त्वया सह मेलितुम् इच्छामि । पूर्णयोगसाधकाः संसारं त्यक्तुं न इच्छन्ति । ते संसारस्य दिव्यरूपान्तरं कामयन्ते ।

## त्वाप्रत्ययः

सायङ्कालः । समयः—विंशत्यून-अष्टवादनम् । अहं सायं मन्त्रान् पठामि । अर्धंहोरां मन्त्रान् पठित्वा दशाधिक-अष्टवादने भोजनाय उपविशामि । भोजनं कृत्वा पञ्चोन-नववादने पाद-चाराय बहिर् गच्छामि । स्वच्छवायौ किञ्चित्कालं भ्रमित्वा प्रायः विंशत्यधिक-नववादने गृहं प्रत्यागच्छामि । गृहं प्रत्यागत्य हस्तौ, पादौ मुखं च प्रक्षालयामि । तानि प्रक्षाल्य शय्यायाम् उपविश्य भगवन्तं स्मरामि । तत्परं स्वपिमि । सुप्त्वा सुखस्वप्नान् पश्यामि । अहं प्रातः चतुर्वादने उत्तिष्ठामि । उत्थाय भगवन्तं स्मरामि । ततः शौचालयं गच्छामि । शौचकार्यं समाप्य व्यायामाय गच्छामि । प्रथमं किञ्चित्कालं पादचारं करोमि । ततः धावामि । अर्धंहोरां मन्दं मन्दं धावित्वा व्यायामं करोमि । व्यायामं कृत्वा दशाधिक-सप्तवादने गृहं प्रत्यागच्छामि । गृहं प्रत्यागत्य दन्तधावनं

स्नानं च कृत्वा, वस्त्राणि परिधाय प्रातराशं करोमि । ततः कार्यालयं गच्छामि । कार्यालये सकलं कार्यं भगवतः सेवाभावेन करोमि, यतो हि कार्यमेव भगवतः श्रेष्ठा उपासना ।

त्वं खेलित्वा कदा गृहं प्रत्यागमिष्यसि ? अहमत्र दश दिनानि स्थित्वा/उषित्वा/अवस्थाय अन्यत्र गमिष्यामि । अहम् उद्यानात् पुष्पाणि अवचित्य/आहृत्य/आनीय, मन्दिरे दत्त्वा, अधुनैव आयामि। आम्राणि वृक्षात् पतित्वा भूमौ लुठन्ति । शिक्षकाः छात्रान् आहूय रोमाञ्चकथां श्रावयन्ति तेभ्यः मिष्टिकां च प्रयच्छन्ति । भक्ताः मन्दिरे उपविश्य भगवन्तं स्मरन्ति । अद्याहं युष्मान् पाठयित्वा, कथां श्रावयित्वा मिष्टिकां च भोजयित्वा परमप्रसन्नः । कदा युष्मान् पुनः दृष्ट्वा हृष्टो भविष्यामि ?

शीघ्रं श्लोकद्वयं लिखित्वा मां दर्शय इति उक्त्वा शिक्षकः कार्यालयं गतः । एषाऽहं जलं पीत्वा त्वरितम् आयामि इति कथयित्वा सा बहिर् गता । अद्याहं शिक्षकात् कथां श्रुत्वा, तं प्रश्नान् पृष्ट्वा, तस्मात् बहुविषयान् च ज्ञात्वा अतीव प्रसन्नः ।

# शाकापणे आलापः

आपणिकः – भो आर्य, किम् इच्छति, वदतु ।

क्रेता – आलुमूल्यं कियत् ?

आपणिकः – प्रतिप्रस्थं सार्ध-त्रि-रूप्यकाणि ।

क्रेता – धत्, अत्यधिकं वदसि । सपाद-त्रीणि गृहाण । गृह्णासि चेत्, पञ्चदश-प्रस्थमितं क्रेष्यामि ।

आपणिकः – अस्तु आर्य, गृह्णातु । अन्यत् किमपि न इच्छति ?

क्रेता – भिण्डा अस्ति ?

आपणिकः – आम्, इतः ।

क्रेता – एताः शुष्काः दृश्यन्ते । सद्यस्काः न सन्ति किम् ?

आपणिकः – एषोऽहं सद्यस्काः चित्वा चित्वा ददामि । गृह्णातु । कियत् इच्छति ?

क्रेता – नहि, एताः न इच्छामि । अन्यत्र क्रेष्यामि ।

आपणिकः – कियत् इच्छति ? वदतु । अभ्यन्तरे अभिनवाः सन्ति ।

क्रेता – दर्शय तावत् । (आपणिकः दर्शयति ।)

क्रेता – आम्, एताः रोचन्ते । मूल्यम् ?

आपणिकः – सपाद-त्रीणि ।

क्रेता – त्रीणि गृहाण । पञ्चप्रस्थमिताः देहि ।

आपणिकः – गृह्णातु । कुत्रापि भवान् इतः अल्पमूल्येन नैव प्राप्स्यति ।

क्रेता – अलम् अलम् । साकल्येन कियत् भवति ?

आपणिकः—त्रिषष्टि-रूप्यकाणि, पञ्चसप्ततिः पणाः ।
क्रेता—गृहाण इदम् ।
आपणिकः—(शत-रूप्य-पत्रं दृष्ट्वा) लघुमुद्राः न सन्ति ?
क्रेता—पश्यामि । आम्, सन्ति । गृहाण ।

## चालक, रोधय यानम्

यात्री—चालक ! भाटकेन गच्छसि ?
चालकः—आम् आर्य ! कुत्र गन्तव्यम् ?
यात्री—शियालदहः ।
चालकः—शियालदहे कुत्र ?
यात्री—सम्मुख-यानपथम् अतिक्रम्य, दक्षिणतः द्वित्रकलाः गत्वा, वामपार्श्वे यद् दशभूमिकं गृहम् अस्ति तत्रैव ।
चालकः—अवगतम् । आगम्यताम् आर्य !
यात्री—शृणु, मम किञ्चित् त्वरा अस्ति ।
चालकः—चिन्तां मा करोतु । वायुवेगेन नेष्यामि ।
यात्री—वायुवेगेन ? नहि नहि, तथा न आवश्यकम् । तेन पैतृकं प्राणधनं हारितं भवेत् ।
चालकः—नहि आर्य ! उपविश्यताम् । कुतः शङ्का ? कलिकातायाम् अहं प्रतिहोरं सामान्यतः षष्टिसहस्रमानवेगेन यानं चालयामि ।

यात्री – दुर्घटना न घटते ?

चालकः – सप्ताहे द्वित्रवारं तु सा भवति एव। किन्तु अधुनावधि भीषणा न जाता !

यात्री – किं कथयसि ?

चालकः – शृणोतु। सद्यः एकस्मिन् औषधापणे यानं प्रविष्टम्। आपणस्य रमणीयधायः यानस्य काचाश्च चूर्णिताः। मम हस्तपादं बहुधा क्षतविक्षतम्।

यात्री – सर्वनाशः ! ततस्ततः।

चालकः – अन्यत् किं स्यात् ? मम याने कश्चित् द्राक्तरः आसीत्। सः उपचारार्थम् औषधापणात् पट्टिकाम् आनीय अबध्नात्।

यात्री – तव भाग्यम् अतीव महत् मन्तव्यम् !

चालकः – यद् भवान् वदति तत् खलु शतं प्रतिशतं समीचीनम्। ह्योऽपि किञ्चिद् अनवधानः अभविष्यं चेत्, यानं 'हाउरा'-सेतुतः गङ्गाजले अपतिष्यत्। यानस्य रोधः साधुः नास्ति। तेनैव एतत् सर्वं घटते।

यात्री – हरे हरे ! अद्य सजीवः गृहं प्राप्नुयां चेत् सौभाग्यम्। हे मधुसूदन, हे विपत्तारिणि, त्रायस्व। (किञ्चित्कालात् परं यात्री व्याकुलः उद्विग्नश्च अवदत्) –

यात्री – चालक ! भोः चालक ! रोधय यानम्, शीघ्रं रोधय।

चालकः – किमर्थम् ? गन्तव्यं तु बहुदूरे !

यात्री – रोधय शीघ्रम्। अहम् अत्रैव अवतरिष्यामि।

चालकः—आर्य ! कुतः भयम् ? हाउरासेतुस्तु बहुकालपूर्वम् अतिक्रान्तः ।

यात्री—नहि, नहि, हाउरासेतुः नहि ।

चालकः—तर्हि ?

यात्री—पश्य, दूरतः औषधापणः । अहो भीतोऽहम् !

## किम् इष्यते ?

वस्त्रापणिकः—किम् इष्यते आर्ये !

ग्राहिका—शाटी तत्समा चोलिका च ।

आपणिकः—कार्पासी वा स्तीर्णकार्पासी वा ?

ग्राहिका—कार्पासी चेत् अतीव सूक्ष्मा, अन्यथा स्तीर्णकार्पासी ।

(आपणिकः दर्शयति ।)

नहि, अतिगाढरङ्गां नहि, मन्दरङ्गां ददातु ।

आपणिकः—इतः तावत् । एताः सर्वाः मन्दरङ्गाः । दृश्यताम् । निरूप्यताम् ।

ग्राहिका—इयम् आकाशनीला रुचिरा ।

आपणिकः—आम्, रङ्गः उज्ज्वलः, भवत्याः शोभिष्यते ।

ग्राहिका—सुष्ठु । मूल्यम् ?

आपणिकः—चोलिकासहिता चेत् पञ्चसप्तति-अधिकं त्रिशतं रूप्यकाणि (रू. ३७५.००) ।

ग्राहिका—आम्, चोलिकासहिता एव। किन्तु भवान् मूल्यम् अतिमात्रं वदति। वयं न नूतनाः। किञ्चित् अल्पीकरोतु।

आपणिकः—क्षम्यताम्। अद्यत्वे वस्त्रमूल्यं वृद्धिं गतम्। अत्र अस्माकम् अधिकलाभः नास्ति। भवती स्थूलां क्रीणातु। दश प्रतिशतम् अवहारं प्राप्स्यति।

ग्राहिका—यदि अस्याः रङ्गः नश्येत् ?

आपणिकः—नहि, नहि, तद्विषये वयम् उत्तरदायिनः। भवती गृह्णातु। रङ्गः नश्येत् चेत्, बीजकेन सह आगच्छतु। वयं मूल्यं प्रतिदास्यामः।

ग्राहिका—सुष्ठु, ददातु तावत्।

आपणिकः—गृह्यताम्, इदं सर्वं भवत्याः।

## विद्यालये आलापः

छात्रः—प्रवेशं प्रार्थये।

शिक्षिका—(द्वारं प्रति दृष्ट्वा) कुतस्तव विलम्बः ?

छात्रः—मम सञ्चिका लुप्ता। ताम् अन्वैषयम्। अद्य हि लेखनदिनम्। अन्यथा ...

शिक्षिका—अथ सञ्चिका प्राप्ता न वा ?

छात्रः—आम् आम्, पश्य (दर्शयति)।

शिक्षिका—उपविश। आगामिवारे ...

(अत्रान्तरे)

अन्यः छात्रः – प्रवेशम् ...

शिक्षिका – (द्वारं प्रति पश्यन्ती) तव किं जातम् ?

छात्रः – आर्ये ! अहं तु तव आज्ञामेव पालयामि । घण्टावादनात् पूर्वमेव अहं विद्यालयम् आगतः । त्वया कथितं 'सेवा परमधर्मः' इति । (हस्तेन सङ्केतयन्) तत्र वातायने एकः काकः उपविश्य उच्चैः कायति । सः निरन्तरं काँ काँ काँ इति शब्दं करोति । मया चिन्तितं यत् पाठे सर्वेषां बाधा भवति । अतः तम् उड्डाययितुं बहुविधाः चेष्टाः अकरवम् । किन्तु स दुष्टः कथमपि न उड्डयते । अन्ते श्रान्तः अहं तस्मिन् उद्घर्षणम् अक्षिपम् । तेन सः उड्डीनः किन्तु मम उद्घर्षणं लुप्तम् । अद्य च लेखनस्य दिनम् । उद्घर्षणस्य अन्वेषणे किञ्चिद्विलम्बः अभवत् । पश्य उद्घर्षणम् ।

शिक्षिका – (द्वारं प्रति अवलोक्य) हन्त भोः ! कथं पठिष्यन्ति एते बालकाः ! किं कुर्याम् ?

जयः – आर्ये ! क्षम्यताम्, विलम्बितोऽस्मि । किन्तु अद्य मया तव वचनं पालितम् । त्वया कथितं यत् 'परोपकाराय इदं शरीरम्' । अहं समयेन एव विद्यालयं प्राप्तः । विद्यालयस्य द्वारदेशे बहूनि रूपान्तरपुष्पाणि पतितानि आसन् । तत्र च आसीत् वराकः अजः कश्चित् । तं दृष्ट्वा मम हृदये दयाभावः जागरितः । मया चिन्तितं यत् तस्य अपि

रूपान्तरं भवेत्, तस्यापि बुद्धिः भवेत्। तस्मात् अहं सबलं तं तानि पुष्पाणि अभोजयम्। तेन विलम्बः अभवत्। (अन्ये बालकाः उच्चैः हसन्ति।)

शिक्षिका—अलं हासेन कालक्षेपणेन च। अधुना पठनीयं तावत्।

## अकबर-वीरबल-प्रसङ्गः

एकदा महाप्रभाते वीरबलः कार्यार्थम् अकबर-महाराजस्य निकटम् अगच्छत्। तं दृष्ट्वा प्रसन्नः महाराजः 'क्षोभयेयं तावत् वीरबलम्' इति स्वगतं व्याहरत्।

वीरबलः—सुप्रभातं महाराज !

अकबरः—भो भो वीरबल ! आगच्छ, आगच्छ। दीर्घायुर्भव। त्वामेव स्मरामि।

वीरबलः—प्रसन्ना ननु सेवकस्य भाग्यलक्ष्मीः।

अकबरः—रात्रौ मया अद्भुतः स्वप्नः दृष्टः !

वीरबलः—राजन् ! महती उत्सुकता मे। कीदृशः स्वप्नः ?

अकबरः—स्वप्ने आवां भ्रमणाय गच्छावः, सु-दू-रं गच्छावः। एकं रमणीयम् उद्यानं प्राप्नुवः। तत्र विविधानि प्रफुल्ल-पुष्पाणि बालरवेः किरणैः खेलन्ति इव। अलिकुलं तानि मुहुर्मुहुः चुम्बति मधुपानं च करोति। मनोहरं तद् दृश्यम्। आत्मविस्मृतौ इव आवाम्। हठात् अहम् एकस्मिन् कुण्डे

अपतं त्वं च अन्यस्मिन्। मम कुण्डं मधुपूर्णं तव च पङ्कमयम्। तेन अहं मधुलिप्ताङ्गः त्वं च दुर्गन्धित-पङ्कगात्रः अभवः। पश्य आवयोः भाग्यम्!

वीरबलः—आश्चर्यं ननु! ह्यः रात्रौ मयापि सदृशः स्वप्नः दृष्टः। किन्तु मया अग्रे किञ्चित् अधिकं दृष्टम्। तत् च भवतः सम्मुखे कथनात् लज्जे।

अकबरः—(औत्सुक्येन) रे कथय, कथय। किम् अधिकं तत्?

वीरबलः—(मन्दस्वरेण) महाराज! मधुपङ्कलिप्तौ आवां परस्परस्य अङ्गानि लिहन्तौ दृष्टौ मया। अहं स्वजिह्वया भवतः अङ्गानि परिष्करोमि भवान् च मम अङ्गानि।

## तन्मयः

(१)

(पुत्रः पाठरतः। वैज्ञानिकः पिता चिन्तामग्नः छत्रं धृत्वा, अङ्गुलिभिः किमपि अङ्कयन् प्रविशति।)

पिता—(प्रविश्य) विद्यालयं गच्छामि तावत्। पुनर्दर्शनाय। (निष्क्रान्तः)

पुत्रः—पुनर्दर्शनाय। (बहुकालं पठित्वा) अहो सायङ्कालः सञ्जातः। पिता आगमिष्यति अधुना।

पिता—(प्रविश्य पूर्ववत् अभिनयं करोति।) आगतोऽहम्।

पुत्रः—हा धिक् ! अद्य पुनः छत्रं लोपितम् ! चतुर्थवारं नूतनं छत्रं लोपयति । अद्य भवान् कुत्र गतः ? कुत्र च त्यक्तवान् छत्रम् ?

पिता—सत्यमेव, मम हस्ते तु छत्रं नास्ति । अहं विद्यालयं गतः, विद्यालयात् स्थेशनम् । ततः आपणं गत्वा गृहं प्रत्यागतः । छत्रं मया कुत्र त्यक्तम् इति न जानामि ।

पुत्रः—अस्मिन् वृद्धवयसि कियत् विस्मरति भवान् ! प्रतिदिनम् एकैकं छत्रम् ! अधुना तु मम सकाशे धनं नास्ति । दिनद्वयं प्रतीक्षणीयम् । तत्परं छत्रं क्रीत्वा दास्यामि । किन्तु भवान् किञ्चित् सावधानः भवतु ।

पिता—अधुना स्मरिष्यामि । ('छत्रम् आत्मना सह आनेतव्यम्', 'छत्रम् आत्मना सह आनेतव्यम्' इति जपन् निष्क्रान्तः ।)

(परदिने)

पिता—पश्य वत्स, पश्य । मया किं कथितम् आसीत् ? न विस्मरिष्यामि इति । त्वं मम स्मृतिशक्तिं निन्दसि । पश्य, अद्य मया स्मृत्वा छत्रम् आनीतम् ।

पुत्रः—छत्रम् ? अद्य गमनसमये भवतः हस्ते तु छत्रं नासीत् ! कस्येदम् ?

पिता—किं वदसि ? मम हस्ते छत्रम् अवश्यम् आसीत् ।

पुत्रः—कुतः आगतम् ? मया तु कथितम् आसीत् क्रीत्वा दास्यामि इति ।

पिता – आम्, तत् तु सत्यमेव । तदा इदं छत्रम् ...
पुत्रः – दर्शयतु । तत्र किमपि लिखितम् अस्ति । (दृष्ट्वा) इदं तु देशिकस्वामिनः छत्रम् !
पिता – किम्, देशिकस्वामिनः ! स तु अस्माकं विद्यालये तमिळ्-अध्यापकः । हा किं कृतं मया ?

(२)

कल्पेशः – (वृत्तपत्रं पठति । वातुलः हरिः प्रविश्य तस्य निकटे उपविशति ।)
हरिः – पश्य रघो ! अहम् आगतः । तव सखा हरिः आगतः । पश्य किञ्चित् । (तं नुदति । कल्पेशः भ्रूभङ्गं कृत्वा, तं दृष्ट्वा पुनः पठति ।) सत्यं रघो ! त्वं कियत् परिवर्तितः ! आवयोः विच्छेदस्य केवलं दश वर्षाणि गतानि । किन्तु त्वयि कियत् परिवर्तनम् ! अधुना त्वम् उपनेत्रे धारयसि !
कल्पेशः – किन्तु बाल्यकालात् मम दृष्टिः मन्दा ।
हरिः – रघो ! तव वेशः अपि परिवर्तितः । पूर्वं सदा संसक्तं वस्त्रं धारयसि स्म, अधुना सर्वं शिथिलं धारयसि ।
कल्पेशः – (गम्भीरस्वरेण) संसक्तं वस्त्रं स्वास्थ्याय हानिकारकम् ।
हरिः – रघो ! तव स्वरः अपि परिवर्तितः । पूर्वं मधुरः आसीत्, अधुना कर्कशः श्रूयते ।
कल्पेशः – (क्षुब्धः) कृपया मां न बाधस्व । मह्यं शान्त्या पठनाय अवसरं देहि ।

हरिः—तव केशाः अपि पलिताः, दन्ताः केचन न दृश्यन्ते । तव सा उच्चता अपि नष्टा । त्वां दृष्ट्वा कोऽपि न कथयिष्यति यत् त्वं स एव रघुः । सत्यं रघो ! सत्यं परिवर्तितः त्वम् ।

कल्पेशः—(क्रुद्धप्रायः) किन्तु मम नाम रघुः नास्ति । अहं कल्पेशः ।

हरिः—अहो यथा मया चिन्तितम् ! त्वया स्वनाम अपि परिवर्तितम् ?

कल्पेशः—शान्तं पापम् ! वृथा मां बाधसे ।

(कुपितः तं ताडयितुं दण्डम् आनयति ।)

हरिः—(स्थूलं दण्डं दृष्ट्वा भयेन पलायमानः) अहो तव स्वभावोऽपि परिवर्तितः ! पूर्वं मित्रम् आसीः, अधुना शत्रुवत् आचरसि ?

(३)

न्यूटन्—(सेववृक्षस्य मूले उपविश्य पाठरतः । सहसा वृक्षात् सेवं पतति ।) आश्चर्यम् ! वृक्षात् सेवं किमर्थं नीचैः पतति ! किमर्थं तद् ऊर्ध्वं न गच्छति ! (इति सेवम् ऊर्ध्वं क्षिपति तत् च नीचैः पतति ।) सत्यं महद् आश्चर्यम् ! मम हस्तस्य वलेन सेवम् ऊर्ध्वं गच्छति । यदा तस्य गतिः मन्दा भवति तदा तत् भूमिं प्रत्यागच्छति । (सः पुनः पुनः सेवम् ऊर्ध्वं क्षिपति तत् च प्रतिवारं भूमिं प्रत्यागच्छति ।) किमर्थं प्रतिवारम् एवमेव भवति ? किमर्थम् ?

सेवकः—(प्रविश्य) आर्य, भवतः प्रातराशः ।

न्यूटन्–आम्, तत्र निकटे स्थापय। अचिरं खादिष्यामि।

सेवकः–यथाज्ञा स्वामिनः। (स्थापयित्वा गतः। न्यूटन् यथापूर्वं पाठरतः।)

(मध्याह्नसमयः)

सेवकः–(प्रविश्य) आर्य, भवतः मध्याह्नभोजनम्। प्रातराशः कीदृशः आसीत्?

न्यूटन्–अतीव साधुः। त्वं निपुणं रन्धयसि।

सेवकः–(भोज्यपात्रम् उद्घाट्य) आर्य, किमेतत्? भवता तु किमपि न खादितम्! मया यत् यत् आनीतम् आसीत् तत्सर्वम् अत्र अस्ति!

न्यूटन्–अहो मया न खादितम्? अस्तु, मध्याह्नभोजनं स्थापयित्वा प्रातराशं प्रतिगृहाण।

सेवकः–आर्य, एवम् अस्पृष्टं निवर्तयति?

न्यूटन्–कथयामि, मध्याह्नभोजनं स्थापयित्वा प्रातराशं प्रतिगृहाण इति।

सेवकः–यथाज्ञापयति स्वामी। (स्थापयित्वा गतः।)

(सायङ्कालः)

सेवकः–(प्रविश्य) अधुनापि तथैव उपविष्टः पठति। नूनं न खादितं किमपि। (उपगम्य) आर्य, किं जातं भवतः? सर्वदा पाठः, पाठः, पाठः! तदर्थं क्षुधामपि न गणयति। पुनः पश्यामि, मध्याह्नभोजनं यथापूर्वम् अस्ति।

न्यूटन्–किं पुनः सायङ्कालस्य उपाहारः आनीतः ? अस्तु, स्थापयित्वा गच्छ ।

सेवकः–नहि आर्य, भवान् मम सम्मुखे एव खादतु ।

न्यूटन्–आम्, खादिष्यामि । कार्यं समाप्य खादिष्यामि ।

सेवकः–तत्तु प्रतिवारं वदति, किन्तु न खादति किमर्थम् ? अहं वृथा रन्धयित्वा समयं नाशयामि किमर्थम् ? तस्मात् अधुनैव खादतु । मम सम्मुखे एव खादतु ।

न्यूटन्–कुतः मां बाधसे अधुना ? अहं कथयामि खादिष्यामि इति । त्वं रात्रौ आगत्य पश्य, पात्रे किमपि न स्थास्यति । (सेवकः गतः । न्यूटन् यथापूर्वं पुनः पाठरतः ।)

(रात्रिकालः)

सेवकः–(स्वगतम्) तथैव उपविष्टः ! मन्ये न खादितं किमपि । अस्मिन् वारे अस्य भोजनं खादित्वा शून्यपात्रं स्थापयिष्यामि । न खादेत् सः । (प्रकाशम्) आर्य, रात्रिभोजनम् आनीतम् । सायङ्काले मया यत् दत्तं तत् खादितम् ?

न्यूटन्–किं रात्रिकालः तथा शीघ्रम् आगतः ? अस्तु, रात्रिभोजनं स्थापयित्वा गच्छ । पाठात् परं खादिष्यामि ।

सेवकः–(स्मयमानः) यथा रोचते स्वामिने । (कोणे तिष्ठन् सर्वं खादित्वा, शून्यपात्रं संवृत्य गच्छति ।) आर्य, साधयामि ।

न्यूटन्–(किञ्चित् विरम्य) आम्, अवश्यम्, अवश्यम् । पृथिव्यां कापि शक्तिः अस्ति या सर्वं स्वं प्रति कर्षति । तस्मात् यः लम्फति सः पुनः भूमौ पतति (इति लम्फति) । आः,

बोधामि अधुना। अस्तु, क्षुधितोऽस्मि, खादेयं किञ्चित्। (पात्रम् उद्घाट्य) अरे किमेतत् ? अहो एवम् ! अरे शृणोषि ! शीघ्रम् एहि।

सेवकः—(स्वगतम्) किं कुर्याम् अधुना ? अवश्यं स्वामी मयि कुपितः भवेत्। कुतः लोभिवत् तस्य भोजनम् अखादम् ? अधुना किं कर्तव्यम् ? (प्रकाशम्) आम् आर्य, आयामि।

न्यूटन्—अरे शृणोषि ? अहं तथा क्षुधितः यथा एकवारं खादित्वा पुनः द्वितीयवारं खादितुम् उद्यतः। पश्य, पात्रं पश्य। (इति भोज्यपात्रं दर्शयति।)

(४)

पत्नी—(प्रविश्य) प्रिय ! ... प्रिय ! प्रिय पतिदेव ! ... कथमपि न शृणोति ! उच्चैः आह्वयामि। प्रिय ! पतिदेव ! तथापि न शृणोति ! (पुस्तकं हस्तेन आच्छाद्य) पतिदेव ! पुष्पाणि आनीतानि।

पतिः—हुं। ओ चायम् आनीतम्। अस्तु, स्थापय तत्र, पटले। (पुनः पाठरतः)

पत्नी—पतिदेव ! चायं न आनीतम्, पुष्पाणि आनीतानि।

पतिः—अह, तद् वद। भोजनम् आनीतम्। स्थापय तत्र, परं खादिष्यामि।

पत्नी—न भोजनम्, पुष्पाणि, पुष्पाणि आनीतानि।

पतिः—पुष्पाणि ? अहो पुष्पाणि ! तर्हि तस्मात् कालात् 'चायम्

आनीतम्', 'भोजनम् आनीतम्' इति कुतः प्रजल्पसि ? कुतः पुष्पाणि मह्यं ददासि ? किमहं पुष्पाणि खादिष्यामि ?

पत्नी – पुष्पाणि कोऽपि खादति ?

पतिः – अह, तर्हि कक्षसज्जार्थम् । तदा मह्यं किमर्थं ददासि ? (पाठरतः)

पत्नी – आर्यपुत्र ! कृपया पुस्तकं त्यक्त्वा शृणोतु माम् । किञ्चित् शृणोतु ।

पतिः – वद, शृणोमि त्वाम् । (किन्तु पुस्तके मग्नः ।)

पत्नी – अद्यतनं दिनं मङ्गलमयम् । पञ्चवर्षेभ्यः पूर्वम् अस्मिन् दिने आवयोः मिलनम् अभवत् । तदाहं पत्नीरूपेण भवतः गृहम् आगता । (पतिदेवं पाठमग्नं दृष्ट्वा तस्य पुस्तकं गृह्णती) पतिदेव, शृणोतु मां कृपया ।

पतिः – मया सर्वं श्रुतम् । तव अन्तिमशब्दः आसीत् 'मङ्गलमयम्' । देहि मम पुस्तकम् ।

पत्नी – पतिदेव ! अहं भवतः पत्नी, अद्य तावत् शुभदिनम्, आवयोः विवाहोत्सवदिनम् । पुष्पाणि स्वीकरोतु कृपया ।

पतिः – अस्तु, स्वीकृतानि पुष्पाणि । अधुना देहि मम पुस्तकम् ।

पत्नी – कीदृक् जनो भवान् ! अस्मिन् शुभदिने किञ्चित् आलपतु मया सह । वदतु – कीदृक् मम वस्त्रम् ? कीदृशं मम मुखम् ?

पतिः – सुन्दरं तव वस्त्रम् । चन्द्रवत् तव मुखम् ।

पत्नी – एवमेव अग्रे किञ्चित् वदतु। अद्य यदि प्रेमालापं न करोति, तर्हि करिष्यति कदा ?

पतिः – अस्तु, यथा ते इच्छा। प्रिये ! अद्यतनं दिनं रमणीयं परमसुभगं च। अहं त्वयि अतीव स्निह्यामि। तव मुखमुद्रां दृष्ट्वा सदा प्रसन्नः भवामि यतो हि त्वम् अस्य गृहस्य सर्वाणि कार्याणि करोषि। त्वां विना कः मम गृहं स्वच्छं करिष्यति ?

पत्नी – पतिदेव ! केवलं तस्मादेव मयि स्निह्यति ? अहं भवतः पत्नी, न भृत्या।

पतिः – किं मम विवाहोऽपि जातः ? कथमपि न स्मरामि ! अपि च, त्वं मम पत्नी ?

पत्नी – आम्, पञ्चवर्षेभ्यः पूर्वम् अहमत्र आगता। भवतः सकलं कार्यं करोमि। अद्य भवतः विवाहोत्सवदिनम्। पञ्चवर्षेभ्यः पूर्वं विवाहः अभवत्। तस्मात् पुष्पाणि अर्पयामि।

पतिः – अहो, एतत्सर्वं पूर्वं कुतः न कथितम् ? अतीव सुन्दराणि पुष्पाणि। तेषां सुगन्धेन हृदयम् आनन्दितं भवति। अद्य त्वया मदर्थे कियत् कष्टं कृत्वा पुष्पाणि आनीतानि। अस्तु, त्वं स्वविवाहदिने माम् अवश्यं कथय, अहमपि तुभ्यं पुष्पाणि दास्यामि ! (पत्नी मस्तके हस्तं दत्त्वा उपविशति।) अवश्यं दास्यामि, सुन्दराणि पुष्पाणि दास्यामि। (निष्क्रान्तः)

# स्वभावः दुरतिक्रमः

सिंही – अद्य प्रभातात् न प्राप्तं किमपि भोजनम् । गृहे शिशवः किं खादिष्यन्ति ? एकः शशकोऽपि नास्ति । . . . अदूरे किमपि चलति । धरिष्यामि तम्, मारयिष्यामि तम् । मम शिशवः प्रसन्नाः भविष्यन्ति । गत्वा पश्यामि सः कः इति । (परिक्रम्य) अरे, अयं तु शृगालशावः । कथं मां दृष्ट्वा भयभीतः ! भोः शिशो ! कुत्र तव माता ?

शृगालः – मम माता नास्ति । अहम् एकलः । मम भयं भवति ।

सिंही – किमपि खादितम् ?

शृगालः – न हि ।

सिंही – (स्वगतम्) कथं मारयिष्यामि तम् ? मम हृदये दया भवति । (प्रकाशम्) किमपि न खादितम् ? तर्हि मया सह चल । मम गृहे स्थास्यसि, खादिष्यसि, खेलिष्यसि । चल, मार्गे भोजनम् अन्वेषणीयम् । (अन्वेषयति) प्राप्तः शशकः । अनेन शिशवः उदरं पूरयिष्यन्ति । एहि शृगाल !

शृगालः – धन्यवादाः । (तौ गृहं प्राप्तौ)

बिडालः – मातुले, मातुले ! क एषः ?

सिंही – एष तव भ्राता ।

सिंहशावः – अत्रैव स्थास्यति ?

सिंही – आम्, अत्रैव स्थास्यति ।

बिडालः – तस्य माता कुत्र ?

सिंही – यथा तव माता दूरे अस्ति, तथैव तस्य मातापि दूरे अस्ति।
सिंहशावः – अयं किं खादिष्यति ?
सिंही – त्वं यत् खादसि, सोऽपि तत् खादिष्यति।
बिडालः – कथं तस्य मुखम्! कथं तस्य पुच्छम्!
सिंहशावः – कथं तस्य कर्णौ! कथं विचित्रः सः!
सिंही – अधुना आगच्छत, सर्वे मिलित्वा खादिष्यामः।
सिंहशावः – (शृगालं प्रति) आगच्छ भ्रातः!
बिडालः – लज्जां न कुरु। आगच्छ। (सर्वे निष्क्रान्ताः)

(एवं मासाः विगताः। एकदा जङ्गले)

शृगालः – भ्रातः! पश्य, कोऽपि विशालः पशुः आगच्छति। पलायामहै, मारयिष्यति सः।
सिंहशावः – वीरो नैव पलायते।
बिडालः – (सिंहशावं प्रति) तदा किं करिष्यसि त्वम्? अयं तु हस्तिशावः आगच्छति।
सिंहशावः – मारयिष्यामः मिलित्वा।
शृगालः – मूर्ख, न गच्छ निकटम्।
बिडालः – भ्रातः, तव भयं नास्ति ?
शृगालः – चल, आवां गृहं प्रति धावाव।
सिंहशावः – सिंहीशिशवो वयम्, नैव कुतश्चिद् भयम्। (हस्तिनं प्रति धावन्) आगच्छतं भ्रातरौ!
बिडालः – आयामि भ्रातः, आयामि।

शृगालः – अहं मातरं गत्वा कथयिष्यामि युवां दुष्टौ मर्तुं गच्छथः इति। (निष्क्रान्तः)

सिंहशावः – (युद्धेन हस्ती म्रियते) हस्ती मृतः, हस्ती मृतः।

शृगालः – मातः, मातः ! भ्रातरौ हस्तिना सह युद्धं कर्तुं गतौ, मम निषेधम् अश्रुत्वा गतौ। दुष्टौ मरिष्यतः अद्य। शीघ्रं धाव मातः ! तौ निवारय। अन्यथा विशालः हस्ती तौ मारयिष्यति।

सिंही – (स्मयमाना) शृणु पुत्र ! शान्तो भव। अयं तव जातिदोषः। सिंहः भयं न करोति, शृगालः करोति। त्वं न सिंहीपुत्रः, त्वं शृगालीपुत्रः। सिंहाः हस्तिनं मारयन्ति, न तु शृगालाः। गच्छ, अधुना अत्र न वस। इतः शीघ्रं पलायस्व। अन्यथा भयालुं त्वां मम पुत्रः आगत्य मारयिष्यति। पलायस्व शीघ्रम्। (तं नुदति। शृगालः दुःखितः पलायते।)

# दुर्बोधाः शिशवः खलु

अकबरः – (चिन्ताकुलः भ्रमति) वीरबलः अकथयत् आगमिष्यामि इति । कुतः विलम्बते सः ? न जानाति स मम बहूनि कार्याणि भवन्ति इति ? श्रान्तस्य मम विश्रामकालं वृथा नाशयति अयम् । आगच्छेत्, चण्डरूपं दर्शयिष्यामि ।

प्रतीहारः – विजयतां सम्राट् ! वीरबलः दर्शनप्रार्थी ।

अकबरः – कुत्र सः ? प्रवेशय शीघ्रम् ।

वीरबलः – विजयतां भवान् । विलम्बः क्षन्तव्यः ।

अकबरः – न क्षन्तव्यः । कुतः विलम्बेन आयासि ? प्रतीक्षमाणः क्लान्तोऽहम् ।

वीरबलः – न शक्तः शीघ्रम् आगन्तुम् ।

अकबरः – कथमेतत् ?

वीरबलः – गृहे शिशुः क्रन्दति स्म । तस्य बोधने समयः गतः । अतो विलम्बितः ।

अकबरः – वीरबल, न हासय माम् । शिशुः क्रन्दति, त्वं तं बोधयितुं न शक्नोषि ! त्वं बुद्धिमान् । शिशुः सरलः । किमर्थं मम सम्मुखे मिथ्या वदसि ?

वीरबलः – किन्तु महाराज, शिशुः बुद्धिबलेन न बोध्यते ।

अकबरः – असत्यमिदम् । नास्ति कोऽपि शिशुः यं बोधयितुम् असमर्थः अहम् ।

वीरबलः—अस्तु, यदि एवम्, अहं शिशुः भवामि, भवान् मम पिता भवतु। बोधयतु माम्।

अकबरः—अस्तु, तथा भवतु।

वीरबलः—आर्य, आरभावहे तावत्। ... पितः, पितः, अहं कादलं खादितुम् इच्छामि पितः!

अकबरः—एवम्, अवश्यम् (तालिकां वादयित्वा), कोऽत्र भोः, कादलद्वयं शीघ्रम् आनय।

प्रतीहारः—इमे कादले। (निष्क्रान्तः)

अकबरः—खाद वत्स, खाद।

वीरबलः—तस्य त्वचम् अपाकरोतु। (राजा तथा करोति।) अन्यस्य अपि। (राजा तथा करोति।) अधुना छुरिकया लघुखण्डान् करोतु द्वयोरपि।

अकबरः—कृताः, आगच्छ वत्स, खाद अधुना।

वीरबलः—(क्रन्दन्) किमर्थं खण्डशः कृतम्? अहं पूर्णं कादलद्वयम् इच्छामि।

अकबरः—पुनः आनेष्यामः।

वीरबलः—नहि, अन्यत् न इच्छामि। एते एव पुनर्योजयतु।

अकबरः—तत् कथं शक्यम्! साधुबालक! एवमेव खाद।

वीरबलः—नहि, एते पुनर्युक्ते एव खादिष्यामि। पितः, एते योजयतु।

अकबरः—वत्स, सकृत् यत् कृत्तं तत् पूर्णं कथं भवेत्? पश्य, अहम् एकं खण्डं खादामि। त्वमपि एकं खाद।

वीरबलः – न, भवान् खादतु, अहं न खादिष्यामि। (राजा खण्डमेकं खादति।)

वीरबलः – आम्, अहं तदेव खण्डम् ऐच्छम्। ददातु तत्।

अकबरः – वीरबल, भवत एव जयः। स्वीकरोमि, दुर्बोधाः खलु शिशवः।

वीरबलः – अधुना आगच्छतु, कार्यार्थं गमिष्यावः। (निष्क्रान्तौ)

# कः भेदः ?

## प्रथमं दृश्यम्

मनुष्यः – (विचारमग्नः, मार्गे इतस्ततः भ्रमन्) कः भेदः ? कः भेदः ? न बोधामि ! कः जानाति ? (उपविशति)
(तेनैव मार्गेण नारदः गच्छति। मनुष्यं विचारमग्नं दृष्ट्वा नारदः विरमति।)

नारदः – किं जातम् ? किं चिन्तयसि ?

मनुष्यः – अहो देवर्षिनारदः ! अपि त्वं जानासि देवानाम् असुराणां च मध्ये कः भेदः इति ?

नारदः – (विचारयन्) भगवान् विष्णुः एव जानाति। चल, तस्य सकाशं गच्छाव। (निर्गतौ)

## द्वितीयं दृश्यम्

(भगवान् विष्णुः क्षीरसागरे शयानः ।)

नारदः – (उपगम्य प्रणमति स्तौति च)

जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ।।

भगवान् – (आशिषः दत्त्वा) देवर्षे ! आगच्छ, आगच्छ । (मनुष्यं दर्शयन्) कोऽयम् ?

नारदः – एषः मनुष्यः, किमपि ज्ञातुम् इच्छति ।

भगवान् – वद, वद, किम् इच्छसि ?

मनुष्यः – भगवन् ! अहं ज्ञातुम् इच्छामि यद् देवानाम् असुराणां च मध्ये कः भेदः ?

भगवान् – (विहसन्) एहि, दर्शयामि त्वाम् । (सर्वे निर्गताः ।)

## तृतीयं दृश्यम्

(भगवान् विष्णुः नारदेन मनुष्येण च सह प्रविशति ।)

भगवान् – पश्य, तत्र किं भवति ?

मनुष्यः – प्रीतिभोजस्य आयोजनम् ! किन्तु . . .

भगवान् – 'किन्तु' किम् ? स्पष्टं वद ।

मनुष्यः – भगवन् ! किमर्थं बृहत्-चमसाः ?

भगवान् – प्रीतिभोजाय सर्वे देवाः असुराः च आगमिष्यन्ति । तेषां सर्वेषां हस्ते बृहत्-चमसः भविष्यति । तेनैव भोजनं कर्तव्यम् । अधुना त्वं स्वयं पश्य ।

(भगवान्, मनुष्यः नारदः च एकस्मिन् कोणे तिष्ठन्ति। प्रथमम् असुराः प्रविशन्ति। भोजनं दृष्ट्वा ते लोलुपाः भवन्ति। भगवान् विष्णुः सम्मुखम् आगत्य वदति –)

भगवान् – तिष्ठत ! तिष्ठत ! न अधुना।

असुराः – किमर्थम् ?

भगवान् – देवाः अपि आगच्छन्तु।

(देवाः प्रविशन्ति।)

देवाः – (भगवन्तं प्रणमन्ति) भगवते नमः।

शङ्ख-चक्र-गदा-पद्म-वनमाला-विभूषितम्।
पीताम्बरधरं देवं वन्दे विष्णुं चतुर्भुजम्॥

भगवान् – (आशिषः दत्त्वा) अपि सर्वे आगताः ?

सर्वे – आम्, भगवन् !

भगवान् – अद्य युष्माकं सहभोजः। (शृण्वन्तः एव सर्वे असुराः भोजने निपतन्ति।) तिष्ठत ! तिष्ठत ! न एवम्। यत् कथयामि तत् शृणुत। (सर्वे शान्ताः तिष्ठन्ति।) अत्र सर्वेषाम् अर्थे चमसाः सन्ति। तैरेव खादितव्यम्। (असुराः आनन्दं नाटयन्ति।) (क्षणं विरम्य) किन्तु न कोऽपि बाहुं वक्रं कुर्यात्। अवबुद्धम् ?

सर्वे – आम्, आम् !

भगवान् – प्रथमम् असुराणां वारः। (सङ्केतेन असुरान् 'आगच्छत' इति वदति। असुराः उपविश्य, अविचार्य एव भोजनलोभेन उच्छलन्ति। सर्वे चमसं गृहीत्वा चेष्टन्ते। कदाचित्

मुखम् अग्रे प्रसार्य चेष्टन्ते, कदाचित् भोजनम् उपरि क्षिप्त्वा मुखेन धर्तुम् उपक्रमन्ते। किन्तु न कोऽपि खादितुं शक्नोति। ते खिद्यन्ते क्रुध्यन्ति च। अन्ते सर्वं भोजनम् अत्र तत्र पतितम्। क्षुधातुराः ते उत्तिष्ठन्ति।)

सर्वे असुराः—असम्भवम्! असम्भवम्! वयं न शक्नुमः।

भगवान्—अस्तु। अधुना देवानां वारः।

(सर्वे देवाः प्रसन्नचित्ताः।) ते परस्परसम्मुखम् उपविशन्ति, चमसेन भोजनं गृहीत्वा परस्परं भोजयन्ति। सर्वे सानन्दं खादन्ति। असुराः लज्जया नतमुखाः तिष्ठन्ति।)

भगवान्—(मनुष्यं प्रति) दृष्टं त्वया? ज्ञातः भेदः?

मनुष्यः—आम्, भगवन्! असुरः सर्वं स्वयं गृह्णाति। देवः अन्यस्मै ददाति। असुरः स्वार्थपरः, देवः उदारः।

## किं नाम बलम्?

(वाद्यम्। शशकौ मञ्चे खेलतः।)

प्रथमचित्रलः—(प्रविश्य) रमणीयं दिनम्!

द्वितीयः—सर्वं सुप्रसन्नम्!

प्रथमः—चल, खेलाव। (पुनर् वाद्यम्)

हरिणौ—(प्रविश्य) उत्प्लवावहे शोभावहे उत्प्लवावहे वने। हरिणशावकावुत्प्लवावहे आवां रमावहे।

प्रथमशशकः—मधुरो घासः।

द्वितीयः—मृदुलो घासः।

प्रथमहरिणः—(दूरं पश्यन्) सिंह आयाति! सिंह आयाति!!

द्वितीयः—पलायध्वम्! पलायध्वम्!

सिंहशावः—(धावन् प्रविशति। माता तं धर्तुम् अनुसरति।)

सिंही—रे रे वत्स! कुत्र गच्छसि?

शावः—खेलितुं गच्छामि मातः!

सिंही—दूरं मा गच्छ वत्स! निकटे खेल।

शावः—किमर्थम्?

सिंही—न जानासि, दूरे मनुष्या वसन्ति।

शावः—मनुष्यः? कः सः?

सिंही—मनुष्यः अस्माकं शत्रुः। महाभयङ्करः सः। सावधानम्! दूरं मा गच्छ।

शावः—अस्तु। न गमिष्यामि। (सिंही निवर्तते। शावः अग्रे सरति।)

व्याघ्रः—(प्रविश्य) किं भोः! त्वमत्र कथम्? मातरम् आह्वयानि?

शावः—आह्वय। अहं मित्रं निमन्त्रयितुं गच्छामि।

व्याघ्रः—को व्यापारः?

शावः—अद्य उत्सवदिनम्। गृहे प्रीतिभोजो भवति। त्वमपि आगच्छ। हरिणमांसं प्राप्स्यसि।

व्याघ्रः—कदा आगच्छेयम्?

शावः—मध्याह्ने ।

व्याघ्रः—सुष्ठु, आगमिष्यामि । (निर्गच्छति)

शावः—मा विस्मर ! (हृष्टः) छलित एषः । मातापि छलिता । कदापि मां न मुञ्चति । कथयति—गृहात् बहिर् मा गच्छ । यदि कोऽपि मनुष्यः पश्येत् तर्हि सर्वनाशः ! कीदृशोऽसौ मनुष्यः ? किं स मत्तः अधिकं बलवान् ? अद्य स द्रष्टव्यः ।

(वृद्धघोटकः धावन् आयाति)

शावः—कस्त्वम् ? अपि त्वं मनुष्यः ?

घोटकः—अहं न मनुष्यः, अहं घोटकः ।

शावः—अहं वनराजस्य पुत्रः । त्वं मां मनुष्यं दर्शय ।

घोटकः—दैव रे दैव ! अहं न शक्ष्यामि । मम भयं भवति ।

शावः—शृणु, अयं राजपुत्रस्य आदेशः । यदि न पालयेः तर्हि (चपेटां दर्शयति) ।

घोटकः—क्षम्यतां स्वामिन् ! मनुष्यः भयङ्करः । स मम प्राणान् हरिष्यति ।

शावः—न भेतव्यम् । सिंहः सर्वाधिकं बलवान् । कुतो भयम् ?

घोटकः—न हि स्वामिन् ! सोऽतीव भयङ्करः, क्रूरः, कृतघ्नः ।

शावः—कथमेतत् ?

घोटकः—पश्यतु, यौवने घोटकद्रवणिकायाम् अहं द्विवारं प्रथमपदं प्राप्तः । अधुना स वृद्धं माम् उपेक्षते । यथेष्टं भोजनमपि न ददाति । बहुभारं वाहयति, निर्दयं ताडयति । अहं

तस्मात् पलायितः, पुनर्नैव गमिष्यामि । (क्रन्दति) स मां मारयिष्यति ।

शावः—अस्तु, गच्छ । (चिन्तयन्) कीदृशो नु मनुष्यः ? कृतम् उपकारमपि न स्मरति ! अद्य तं दृष्ट्वा उचितां शिक्षां दास्यामि ।

(गच्छन्तं गर्दभं दृष्ट्वा)

अयि भोः ! कस्त्वम् ? अपि त्वं मनुष्यः ?

गर्दभः—अहं न मनुष्यः, अहं गर्दभः ।

शावः—तर्हि कीदृशोऽसौ मनुष्यः ? त्वं मां मनुष्यं दर्शयिष्यसि ?

गर्दभः—हरे हरे ! क्षम्यतां भद्र ! न शक्नोमि ।

शावः—राजपुत्रोऽहम् । आज्ञां न पालयसि ?

गर्दभः—क्षम्यतां स्वामिन् ! मनुष्यः अतीव भयङ्करः । अहं तं नैव उपगमिष्यामि ।

शावः—किं स सत्यं भयङ्करः ?

गर्दभः—न केवलं भयङ्करः, अपि तु निर्दयः, कृतघ्नः, प्रपीडकः ।

शावः—एवम् !

गर्दभः—पश्यतु, अहं तस्य गृहे बहुवर्षाणि अवसम् । स मां पृष्ठेन पर्वताकारं वस्त्रभारं वाहयति । मम कष्टं न बोधति । (क्रन्दति) मां भृशं ताडयति । पश्यतु इमानि चिह्नानि । पुनर्नैव उपगमिष्यामि तम् ।

शावः—अस्तु, गच्छ । कीदृशोऽसौ मनुष्यः ? सर्वे तं निन्दन्ति । कथं स द्रष्टव्यः ?

(चलति। वानरौ दृष्ट्वा)

शावः—रे रे वानरौ ! किं कुरुथः ?

प्रथमवानरः—अहो राजपुत्रः आयाति !

द्वितीयः—कुत्र गच्छसि राजपुत्र ?

शावः—मनुष्यं द्रष्टुम् । चलतं मया सह ।

प्रथमवानरः—नैव नैव । मनुष्यः महादुष्टः ।

शावः—अपि स त्वया सत्यं दृष्टः ?

प्रथमः—आम् आम्, सः अस्मान् धृत्वा पथि पथि नर्तयति। बहुकष्टेन आवां पलायितौ ।

द्वितीयः—त्वमपि पलायस्व ।

शावः—धत् ! सर्वे दुर्बलाः ! अहं राजपुत्रः, बलवान् । एकलो गमिष्यामि ।

(अग्रे हस्तिनौ दृष्ट्वा लुक्कायितः शृणोति)

प्रथमहस्ती—अद्य मया मनुष्यः दृष्टः ।

द्वितीयः—सत्यम् ?

प्रथमः—आम् आम्, स शुष्कं वृक्षं छिनत्ति स्म ।

द्वितीयः—चल चल, शीघ्रं गच्छाव ।

शावः—शीघ्रं गच्छामि । मनुष्यः निकटे एव भवेत् ।

(वर्धकिः आयाति, सिंहः लुक्कायते ।)

शावः—(यदा वर्धकिः निकटम् आयाति) अरे ! कस्त्वम् ?

वर्धकिः—(सभयम्) अहं वर्धकिः ।

शावः—अपि त्वं मनुष्यः ?

वर्धकिः—आम्, अहं मनुष्यः ।

शावः—तर्हि त्वमेव सः ! कुत्र गच्छसि ?

वर्धकिः—गृहं निर्मातुं गच्छामि ।

शावः—तिष्ठ । अहं वनराजस्य पुत्रः । प्रथमं मम कृते उत्तमं गृहं निर्मािहि ।

वर्धकिः—न शक्नोमि । त्वराकुलः अहम् । (इति गच्छति ।)

शावः—रे रे ! न शृणोषि, राजादेशं न पालयसि ? कृतघ्नो जीवः (चपेटयति) ।

वर्धकिः—(मस्तकं धृत्वा तिष्ठति । विचार्य वदति) अस्तु तावत्, तुभ्यं गृहं निर्मामि । (स्वसहायकं वर्धकिं प्रति) क्रकचं देहि । घनम् आनय ।

(निर्माणक्रियाम् अभिनयति)

शावः—(पञ्जरं परिक्रामन् नृत्यति, गायति ।)
पश्य मह्यं गृहं रचयति पश्य मह्यं गृहम् ।
सुखं मे वासो भविष्यति गृहं मे सुस्पृहम् ॥

वर्धकिः—राजपुत्र ! अपि रोचते ?

शावः—भृशं रोचते । (पञ्जरं निरीक्षमाणः) शोभनमिदम् ।

वर्धकिः—प्रविश तावत् । शोभय इदम् ।
(सिंहशावः यावत् प्रविशति तावत् वर्धकिः ठक् इति द्वारं संवरति । शावः बद्धः क्रुध्यति, गर्जति, विचेष्टते ।)

शावः– उद्घाटय ... हुम् ... उद्घाटय द्वारम् ... हुम् ... द्वारमुद्घाटय ।

वर्धकिः– राजपुत्र ! अधुना पञ्जरं चपेटय । साधयामि तावत् । (स्वरं परिवर्त्य किञ्चिद् उच्चैः) देहबलं किं बलम् ! बुद्धिबलं बलम् ! (इति सर्वे निष्क्रान्ताः)

# चोरस्य चातुर्यम्

सूत्रधारः– आसीत् कश्चित् चोरः । स सर्वदा सत्यं वदति । अतीव बुद्धिमान् सः । एकदा स रात्रौ कस्यापि धनिकस्य गृहे चौर्यं कर्तुं गच्छति ।

(रङ्गमञ्चे द्वारपालौ स्थितौ । चोरः द्वयोः सम्मुखे द्वारं प्रविशति ।)

प्रथम-द्वारपालः– कस्त्वम् ?

चोरः– (शान्तभावेन) चोरः ।

(द्वारपालः चकितः अन्यस्य मुखं पश्यति । अत्रान्तरे चोरः निर्विघ्नं गृहं प्रविशति ।)

द्वितीय-द्वारपालः– कोऽपि चोरः एवं न वदति ।

प्र. द्वा.– आम् आम्, स न चोरः । (उभौ पुनः रक्षणे व्यापृतौ । तत्रान्तरे चोरः चोरितानां वस्तूनां पोटलीं गृहीत्वा द्वारात् निर्गच्छति ।)

द्वि. द्वा.– रे रे, किं नयसि ?

चोरः—वस्तूनि नयामि । (निष्क्रान्तः)

प्र. द्वा.—विचित्रो जनः !

द्वि. द्वा.—धनिकस्य कोऽपि परिचितः स्यात् ।

प्र. द्वा.—सत्यं वदसि । (निष्क्रान्तौ)

सूत्रधारः—धनिकः प्रभाते उत्थाय पश्यति—मम अमूल्य-वस्तूनि चोरितानि इति । व्याकुलः स द्वारपालौ पृच्छति ।

धनिकः—रात्रौ गृहे चौर्यम् अभवत्, जानीथः ? (द्वारपालौ परस्परं पश्यतः ।) किं परस्परं मुखं पश्यथः ? मधुरं स्वप्नं पश्यथः ? ... उत्तरम् इच्छामि ।

द्वि. द्वा.—स्वामिन् ! एकः जनः आगतः रात्रौ ।

प्र. द्वा.—अहं तम् अपृच्छम्—'कस्त्वम् ?' सः अवदत्—'अहं चोरः ।'

धनिकः—ततः ?

द्वि. द्वा.—ततः सः अन्तरं गत्वा अचिरं बहिरागतः । तस्य हस्ते एका पोटली आसीत् ।

प्र. द्वा.—अहम् अपृच्छम्—'किं नयसि ?' सः अवदत्—'वस्तूनि नयामि ।'

धनिकः—ततस्ततः ?

द्वारपालौ—ततः आवाम् अचिन्तयाव, स कोऽपि भवतः परिचितः । चोरस्तु एवं न वदति ।

धनिकः—(क्षणं विचार्य) अस्तु, विलक्षणः चोरः सः । युवाभ्यां स धर्तव्य एव । (निष्क्रान्तः)

सूत्रधारः—द्वारपालौ कथमपि चोरं धरतः। धनिकः तं राजसमीपं नयति।

(राजसभा। धनिकः चोरं राजसम्मुखम् आनयति।)

धनिकः—राजन्! अयं मम गृहे चौर्यम् अकरोत्।

राजा—रे तस्कर! किं त्वं चौर्यम् अकरोः?

चोरः—आम्, राजन्!

राजा—कुतः चोरयसि?

चोरः—महाराज! वस्तुभिः प्रयोजनम् इति।

राजा—चौर्यं विना तानि न प्राप्नोषि?

चोरः—नहि। अहं दरिद्राणां गृहात् न चोरयामि।

राजा—तर्हि धनिकानां गृहात् किमर्थं चोरयसि?

चोरः—तेषां गृहे बहूनि वस्तूनि सन्ति यानि तेषां निष्प्रयोजनानि।

राजा—चौर्यस्य फलं जानासि?

चोरः—कारावासः मृत्युदण्डो वा।

राजा—(द्वारपालौ प्रति) इमं काराबद्धं कुरुतम्। (द्वारपालौ तं नयतः। धनिकः निर्गच्छति।)

मन्त्री—राजन्! न एष सामान्यचोरः। चौर्यस्य फलं जानन् अपि सत्यं वदति।

राजा—आम्। तथापि, दण्डस्तु सर्वेषां चोराणां समानः।

मन्त्री—कियत्कालं तेन कारावासे स्थातव्यम्?

राजा—दिनमेकम्। पश्चात् तस्य मस्तकच्छेदः।

मन्त्री—मरणात् पूर्वं तस्य इच्छा पूरणीया।

राजा—आम्, गच्छावः। (निष्क्रान्तौ।)

(रङ्गमञ्चे कारावद्धः चोरः। राजा मन्त्रिणा सह आयाति।)

राजा—अयि भोः! श्वः प्रभाते तव शिरश्छेदः। मरणात् पूर्वं कामपि इच्छां पूरयितुम् इच्छसि?

चोरः—न मे कापि इच्छा। केवलम् एका चिन्ता।

राजा—का चिन्ता?

चोरः—मम गुरुः माम् एकां विद्याम् अशिक्षयत्।

राजा—का सा विद्या?

चोरः—स्वर्णकृषेः विद्या।

राजा—(व्यङ्ग्चेन) सत्यवादी चोरः मरणात् पूर्वं मिथ्या वदति।

चोरः—नहि राजन्! अहं मिथ्या न वदामि। कस्यापि विश्वासः न भविष्यति—अतोऽहं वक्तुं न ऐच्छम्।

मन्त्री—(राजानम् एकतः आनीय) महाराज! चोरः अस्माकं हस्ते एव। यदि स सत्यं वदति तर्हि अस्माकं लाभः। यदि मिथ्या वदति तर्हि तस्य मरणं तु निश्चितम्। का हानिः श्रवणे?

राजा—सुष्ठु वदसि। (चोरम् उपगत्य) कथय, का सा विद्या?

चोरः—कृत्वा दर्शयिष्यामि, न तु कथयित्वा।

मन्त्री—अस्तु, कुरु।

चोरः—तदर्थं भूमिखण्डम्, स्वर्णबीजानि किञ्चित्समयं च वाञ्छामि।

राजा – मन्त्रिन् ! एष पलायनस्य उपायः ।

चोरः – नहि, नहि राजन् ! अहं पलायितुं न इच्छामि । सैनिकान् मम अवेक्षणाय कथयतु । अथवा, यदि भयं स्यात् तर्हि मारयतु मां प्रभाते । अहं तु अस्मिन् कारागारे बद्ध एव ।

मन्त्री – राजन् ! एष न मिथ्यावादी । किञ्च, अयं तु कारावद्धः, इतः पलायितुं नैव शक्नोति । अनुमतिं ददातु ।

राजा – (विचार्य) अस्तु, तुभ्यं सर्वं दास्यामि । त्वं स्वर्णकृषिं दर्शय ।

चोरः – अनुगृहीतोऽस्मि । स्वर्णकारं कथयतु एतावन्ति (सङ्केतेन) स्वर्णबीजानि कुर्यात् ।

राजा – अस्तु । (समन्त्री निष्क्रान्तः ।)

सूत्रधारः – राजा चोराय भूमिखण्डं दापयति स्वर्णकारं च स्वर्णबीजार्थम् आदिशति । चोरः अधुना भूमिं कृषति । सैनिकाः तस्य अवेक्षणं कुर्वन्ति ।

(वाद्यम्)

(रङ्गमञ्चे सैनिकाः सर्वतः चोरम् अवेक्षन्ते । चोरश्च परिश्रमेण भूमिं कृषति ।)

सूत्रधारः – दिनत्रयं गतम् । चतुर्थे दिने राजा भूमिं द्रष्टुम् आयाति ।

राजा – (भूमिं सर्वतः निरीक्ष्य) अपि भूमिः सज्जा ?

चोरः – आम्, राजन् ! अपि बीजानि सज्जानि ?

राजा – आम् । (राजा बीजानि दर्शयति ।)

चोरः – तर्हि श्वः प्रभाते एव बीजवपनं भविष्यति । राज्ये घोषयतु, यो यो द्रष्टुम् इच्छति स आगच्छेत् । सूर्योदयस्य प्रथमकिरणेन सह प्रथमं बीजं भूमौ पतिष्यति ।

राजा – बाढम् । (निष्क्रान्ताः सर्वे ।)

सूत्रधारः – राज्ये सर्वत्र घोषणा भवति । सर्वे घोषणां श्रुत्वा भृशं चकिताः । ते स्वर्णकृषिं द्रष्टुम् उत्सुकाः । परेद्युः प्रभाते ब्राह्ममुहूर्ते एव भूमिं परितः जनसम्मर्दः ।

(वाद्यम्)

(चोरः भूमिमध्ये तिष्ठति । राजा बीजानि आदाय आयाति । सर्वे यथास्थानम् उपविशन्ति ।)

चोरः – राजन् ! भवान् एव प्रथमं बीजं वप्स्यति ।

राजा – न त्वम् ?

चोरः – नहि ।

राजा – कुतः ?

चोरः – यतो हि अहं चोरः । यः कदापि चौर्यं न करोति स एव वप्तुं शक्नोति । भवान् राजा, धर्मात्मा, न्यायी, सर्वेषां श्रेष्ठः । आयातु, अचिरं सूर्योदयः भविष्यति ।

राजा – (स्वगतम्) 'यः कदापि चौर्यं न करोति !' (प्रकाशम्) नहि, अहं वप्तुं न शक्नोमि । मया बाल्यकाले एकः लड्डुकः चोरितः ।

चोरः – तर्हि महामन्त्री वपतु । स ज्ञानी वृद्धश्च ।

महामन्त्री – (विचारयन्) नहि, नहि, अहमपि न शक्नोमि। एकदा मया स्वमित्रस्य मिष्टिका चोरिता।

चोरः – महाराज ! पूज्यः पुरोहितः सदा पूजापाठादिकं करोति। तेन किमपि पापं न कृतं स्यात्।

राजा – पण्डितवर ! भवतः हस्तेन बीजवपनं भवतु। आयातु।

पुरोहितः – राजन् ! कथं वदानि ! एकदा भृशं क्षुधितः अहं पूजायाः फलम् अखादम्।

चोरः – महाराज ! घोषयतु, येन कदापि किमपि न चोरितं स आगच्छेत्। विलम्बः न कर्तव्यः।

राजा – युष्मासु यः कदापि चौर्यं न अकरोत् स क्षेत्रम् आगच्छतु। (सर्वे परस्परं मुखं पश्यन्ति, विचारयन्ति, कर्णजापं कुर्वन्ति। चोरः आकाशं पश्यति। राजा सर्वान् पश्यति।)

चोरः – सूर्यः उदितः महाराज ! बीजवपनस्य वेला गता। किमहं प्रश्नमेकं कर्तुं शक्नोमि ?

राजा – आम्, कुरु।

चोरः – देव, यदि अत्र उपस्थिताः सर्वे चोरा एव सन्ति तर्हि केवलम् एकस्मै मृत्युदण्डः किमर्थं दीयते ? (किञ्चिद् विरम्य) यतो हि स सत्यं वदति ?

राजा – भद्र ! अहं सर्वं बोधामि। त्वया मम नेत्रे उन्मीलिते। चौर्यस्य मृत्युदण्डः आसीत्। तस्य वेला गता। अधुना सत्यभाषणस्य पुरस्कारं प्राप्स्यसि। (सर्वान् प्रति) इतः

परम् एष सत्यवादी मम महामन्त्री भविष्यति । सेनापते ! तस्य परिवारस्य अर्थे सर्वां व्यवस्थां कुरु । (चोरं प्रति) एहि । (अन्यान् प्रति) पुनर्दर्शनाय ।

# साहसम्

सूत्रधारः—रावणेन सीता हृता । श्रीरामः वानराणां साहाय्येन युद्धार्थं सज्जः । रावणः सभाम् आह्वयति । (तूर्यनादः)

प्रथममन्त्री—तूर्यनादः श्रूयते । महाराजः मन्त्रणार्थं सभाम् आह्वयति ।

द्वितीयमन्त्री—किन्तु किमर्थम् ?

तृतीयमन्त्री—अधुनैव ज्ञास्यामः । (ततः रावणादयः प्रविशन्ति ।)

रावणः—(सिंहासने उपविष्टः) यूयं सर्वे जानीथ यत् रामो मम भगिन्याः सूर्पणखायाः मुखमण्डलं विकृतम् अकरोत्, खरं दूषणं च अमारयत् । प्रतिशोधरूपेण मया सीता अपहृता । किमेतत् अनुचितम् आसीत् ?

सर्वे—नहि, नहि, कथमपि नहि । सर्वथा उचितम् ।

रावणः—यदि कोऽपि युष्माकं भगिन्याः नासिकां कर्णौ च कृन्तति, यूयं किं निष्क्रियाः स्थास्यथ ?

सर्वे—नहि, नहि, कदापि नहि ।

रावणः—एतादृशम् अपमानं किं सहिष्यामहे ?

सर्वे—नैव, नैव ।

प्रथममन्त्री—कः सः क्षुद्रो रामः यः अस्माकं राक्षसकुलस्य अपमानं करोति ?

रावणः—कुत्र अस्ति अस्माकं युद्धबलम् ? कुत्र अस्माकम् आत्मसम्मानः ?

सर्वे—युद्धम्, युद्धम्, युद्धम् एव उपायः । युद्धार्थं सज्जाः वयम् ।

रावणः—साधु, साधु ! अस्माकं गमनेन प्रयोजनं नास्ति । रामः स्वयम् अत्र आगमिष्यति सीतां प्रतिनेतुम् ।

सर्वे—वयं तं न मोक्ष्यामः ।

रावणः—किं तदा यूयं सर्वे मम सहायाः ?

प्रथममन्त्री—आम् आम् । वयं सर्वे सहायाः । भयेन किम् ? वयं सर्वे तथा युद्धं करिष्यामः यथा रामो विनंक्ष्यति ।

द्वितीयमन्त्री—भवानेव रामस्य भयकारणम् । भवान् इन्द्रस्यापि जेता । रामस्तु सामान्यो मनुष्य एव ।

तृतीयमन्त्री—मयि लङ्कायाः सेनापतौ किञ्चिदपि न भेतव्यम् ।

द्वितीयमन्त्री—लङ्कायाः अर्थे जीवनं दातुं सदैव सज्जोऽस्मि ।

रावणः—सुप्रसन्नोऽस्मि ।

प्रथममन्त्री—युद्धम् अवश्यम् । सीता नैव प्रतिदातव्या ।

रावणः—विभीषण ! प्रियभ्रातः ! तव मुखात् किमपि न श्रुतं मया । माल्यवन् ! भवानपि मम मन्त्रिणां मध्ये प्रधानः । किं मतं भवतः ?

विभीषणः—ज्येष्ठभ्रातः ! यदि त्वं लङ्कायां सुखेन स्थातुम् इच्छसि, यदि त्वं स्वकुलस्य मङ्गलम् इच्छसि, तर्हि सीता प्रतिदातव्या । रामस्य सकाशात् क्षमा प्रार्थनीया । स सर्वं क्षमिष्यति । गर्वी उन्मत्तश्च मा भव ।

रावणः—विभीषण !

माल्यवान्—महाराज ! भवतो भ्राता सुष्ठु वदति । स यथा कथयति तथा कर्तव्यम् ।

रावणः—(गर्जन्) नहि नहि, एवं नैव करिष्यते । युवां मम शत्रू, शत्रोः सुभगम् इच्छथः । निर्गच्छतम् इतः ।

माल्यवान्—किन्तु ...

रावणः—लङ्काकलङ्क माल्यवन् ! स्वहस्तेन त्वां मारयिष्यामि । (माल्यवान् पलायते) गच्छ गच्छ, न त्वं मन्त्रिपदयोग्यः । विभीषण ! अधुनापि वक्तुकामः किमपि ?

विभीषणः—प्रत्येक-मनुष्यस्य हृदये ज्ञानमस्ति, अज्ञानमपि अस्ति । यदि ज्ञानं प्रभावशालि भवति तर्हि तस्य जीवनं सम्यक् प्रचलति, यदि अज्ञानं प्रभवति तर्हि विपथगामी जनः सदा दुःखभाक् भवति । मन्ये तव हृदये अधुना अज्ञानस्य राज्यम् ।

रावणः—विभीषण ! स्वजिह्वां संयतां रक्ष ।

विभीषणः—एते मन्त्रिणः न तव सत्यमित्राणि । तेषां वचनैस्त्वं सत्पथाद् भ्रष्टः ।

रावणः—(विभीषणं पादेन प्रहृत्य) भीरो ! कापुरुष ! किं

प्रजल्पसि ? एतद् ऋषिमुनिसम्मुखे वद, न विश्वजिद्रावण-सम्मुखे । अपेहि !

(विना विभीषणं निष्क्रान्ताः सर्वे ।)

विभीषणः – (स्वगतम्) मम अग्रजस्य बुद्धिः नष्टा । स सत्यं जानन् अपि स्वीकर्तुं न इच्छति । लङ्कायां सत्यस्य स्थानं नास्ति । अहं तु सत्यं त्यक्तुं न इच्छामि । अधुना एक एव मार्गः अवशिष्टः । अहं रामस्य शरणार्थी भविष्यामि । सत्यस्य कृते अहं देशमपि त्यक्तुं सज्जः ।

(उत्थाय निष्क्रान्तः ।)

सूत्रधारः – विभीषणस्य साहसम् आसीत् । स सत्यभाषणात् न दरति । तदर्थं भ्रातुः पदाघातमपि सहते । तस्य शारीरसाहसं मानसिकसाहसं च आस्ताम् ।

## प्रतिनिधिः

(दुर्गशिखरात् शिवराजः सगर्वं परितः अवलोकयति ।)

रामदासः – (मार्गे गायन् गच्छति ।)

अन्नपूर्णे सदा पूर्णे शुभे सर्वशुभङ्करि ।
जगद्धात्रि जगन्मातर्नित्यं दुर्गतिनाशिनि ।
अनन्तं गौरवं तेऽम्ब, अमेया खलु ते कृपा ।।

शिवराजः – आश्चर्यं खलु ! किमिदं पश्यामि ? गुरुदेवस्य हस्ते

भिक्षापात्रम् ! यस्य पादतले सकलैश्वर्याणि लुठन्ति, स्वयं शिवराजः यस्य पदानतः, स कथं भिक्षां याचते ? (नेपथ्याभिमुखः) कोऽत्र भोः ?

प्रतिहारः—अयम् अहम् आर्य ! आज्ञापयतु ।

शिवराजः—त्वरितं गत्वा गुरुदेवं सादरम् आनय ।

प्रतिहारः—तथा । (निष्क्रम्य क्षणान्तरेण गुरुणा सह प्रविशति ।)

शिवराजः—गुरुदेव ! (निष्क्रान्तः प्रतिहारः । सिंहासनं दर्शयन्) अलङ्करोतु आसनम् इदम् । (गुरुः सिंहासने उपविशति । शिवराजः तस्य पादयोः नत्वा) गुरुदेव ! एषोऽहं भवतः प्रणतो दासः । राज्यं भवते अर्पयामि । कृपया भिक्षां न याचताम् ।

रामदासः—अस्तु वत्स ! गृहाण इदं भिक्षापात्रम्, धारय इदं गैरिकवस्त्रम् । (तस्य हस्ते पात्रं निधाय तं वस्त्रं परिधापयति । आश्चर्यचकितः शिवराजः तस्य मुखं विलोकयन्)

शिवराजः—भवतः आज्ञा शिरोधार्या । ('भगवन्, भिक्षां देहि' इति वदन् गृहात् गृहं गत्वा भिक्षते ।)

## द्वितीयं दृश्यम्

(शिवराजः दूरात् रामदासस्य स्वरं शृणोति ।)

रामदासः—अनन्तं गौरवं तेऽम्ब, अमेया खलु ते कृपा ।

शिवराजः—अहो सञ्जातः सायङ्कालः । गुरुचरणान् उपगच्छामि ।

(भिक्षापात्रं पश्यति, स्मयमानः गत्वा, गुरुचरणयोः प्रणम्य) गुरुदेव ! स्वीक्रियतां भिक्षान्नम् ।

रामदासः – वत्स ! राज्यभारं प्रतिददामि तुभ्यम् ।

शिवराजः – नेच्छामि गुरुदेव ! राज्यं भवतः । अहं तेन किं कुर्याम् ?

रामदासः – शृणु वत्स ! राज्यं वस्तुतः न कस्यापि, राज्यं भगवतः एव । राजा केवलं तस्य प्रतिनिधिः । उत्तिष्ठ, प्रतिनिधि-रूपेण राज्यं पालय । अद्य प्रभृति इदं गैरिकं वस्त्रं तव ध्वजः स्यात्, त्वां त्वत्कर्तव्यं स्मारयेत् । (शिवराजः गुरुचरणयोः प्रणमति, रामदासः आशीर्वादमुद्रया स्वहस्तं शिवराजस्य मस्तके स्थापयति । नेपथ्यात् श्रूयते –)

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

# शठे शाठ्यं समाचरेत्

एकदा वने व्याधैः स्थापिते पञ्जरे कोऽपि व्याघ्रः अपतत् । तस्मात् निर्गन्तुं महाप्रयत्नं कृत्वापि सः विफलः अभवत् ।

व्याघ्रः – (श्रान्तः भूत्वा) कथं निर्गच्छेयम् अस्मात् दुर्गरूप-पञ्जरात् ? अहो विधेर्विडम्बना ! (अत्रान्तरे कमपि ब्राह्मणं तेन मार्गेण गच्छन्तं दृष्ट्वा) दृष्टः उपायः ।

भो दयालो ब्राह्मण ! सर्वथा परोपकारी भवान् । जीवदया भवतः धर्मः । पश्य, अहम् अस्मिन् कारागारे पातितः क्रूर-व्याधैः । कृपालो ! मोचय माम् अस्मात् पञ्जरात् । महत् पुण्यं ते भविष्यति अनेन कर्मणा ।

ब्राह्मणः—व्याघ्रः प्रकृत्या हिंस्रः इति जनाः वदन्ति । क्रूरस्य कारावासः एव योग्यः न तु वने विचरणम् । यदि अहं त्वां मोचयामि तर्हि त्वं निर्दोषान् पशून् मारयिष्यसि । अन्यथा मुक्तः त्वं माम् एव खादिष्यसि । कथं मारात्मके त्वयि विश्वासं कुर्यां दयां वा दर्शयेयम् ?

व्याघ्रः—अयि पुण्यदर्शन ब्राह्मण ! कथं नाहं विश्वासपात्रम् ? पश्चात्तापेन दग्धं मे पूर्वाचरितं पापम् । यत् किमपि अवशिष्टं तदपि तव दर्शनेन नष्टम् । बन्धनमुक्तः अहं तव शिष्यः भविष्यामि, तपस्यां कृत्वा भगवत्प्राप्ति साधयिष्यामि ।

ब्राह्मणः—सत्यं पश्चात्तापेन नष्टं तव पापम् इति प्रतीयते । अन्यथा कुतः धर्मज्ञानस्य उदयः त्वयि ? अतः मोचयामि त्वाम् । धर्मं चर । प्रतिज्ञाभङ्गं मा कुरु । (एवं कथयन् ब्राह्मणः पञ्जरस्य द्वारम् उद्घाटयति ।)

व्याघ्रः—भृशं क्षुधितः अस्मि । न पश्यामि अत्र कमपि पशुम् । अतः त्वाम् एव खादिष्यामि । अन्तिमवारं स्वम् इष्टदेवं स्मर । (एवं कथयन् व्याघ्रः तं नखैः धरति ।)

ब्राह्मणः—(भयभीतः) रे कृतघ्न ! माम् उपकारिणं मारयसि ? कुत्र गतं तव धर्मज्ञानं प्रतिज्ञा च ?

व्याघ्रः—का कथा रे मूढ धर्मस्य अधुना ! उदरपूजा एव परमः धर्मः । चिरम् उपवासात् क्षुधितः अस्मि । जातिधर्मं चरामि । न इच्छामि तव उपदेशम् ।

ब्राह्मणः—हा कष्टम् ! व्यर्थं हिंस्रे अस्मिन् विश्वासः कृतः मया । कृतघ्नः अयं व्याघ्रः । किं करोमि ?

व्याघ्रः—रे मूर्ख ! सङ्कटगतः प्राणी कामपि प्रतिज्ञां कुर्यात् नाम, सङ्कटमुक्तः सः कुतः तां पालयेत् ? केवलं पूजामेव जानासि । नास्ति बुद्धिः नाममात्रापि ते मस्तके ।

ब्राह्मणः—मया रक्षितः त्वम् । मामेव भक्षयसि ? न एतत् उचितम् । मा एवं कृतघ्नः भव । अन्यायं मा कुरु ।

व्याघ्रः—न एषः अन्यायः ब्रह्मन् ! सर्वत्र एषा एव परिपाटिः अस्मिन् जगति ।

ब्राह्मणः—न मे तत्र विश्वासः ।

व्याघ्रः—भवतु । अत्र पञ्च साक्षिणः पृच्छाव । तेषां निर्णयं स्वीकरिष्यामि अहम् । चल, तम् आम्रवृक्षं पृच्छाव ।

ब्राह्मणः—भो आम्र ! त्वमेव आवयोः न्यायं कुरु । एष व्याघ्रः पञ्जरे आसीत् । मया एष मोचितः । अधुना अयं मामेव खादितुम् इच्छति । कृतघ्नः अयं व्याघ्रः ।

आम्रवृक्षः—बन्धो ! एषा एव जगतः रीतिः । अहमपि मनुष्येभ्यः फलानि शीतलां छायां च ददामि । किन्तु मनुष्याः कृतघ्नाः । ते मम शरीरे कुठाराघातं कुर्वन्ति । (व्याघ्रं प्रति) खाद इमं मनुष्यं सरुचि । (व्याघ्रः ब्राह्मणं खादितुं कूर्दते ।)

ब्राह्मणः—तिष्ठ तावत्, एनं काकं पृच्छाव ।

व्याघ्रः—भोः काकराज ! आवयोः न्यायं कुरु । अहं पञ्जरे आसम् । एष ब्राह्मणः मां तस्मात् अमोचयत् । अधुना क्षुधितः अहं तं खादितुम् इच्छामि ।

काकः—एते मनुष्याः अतिदुष्टाः । वयं काकाः मनुष्याणां सदा सहायकाः । जगतः मालिन्यं दूरीकुर्मः । किन्तु मनुष्याः सर्वदा कथयन्ति—'एते काकाः मलिनाः, कुरूपाः, एतेषां स्वरः च कर्कशः ।' ते अस्मासु यथेच्छं दुराचरन्ति, उपलखण्डान् क्षिपन्ति, अस्माकं नीडानि त्रोटयन्ति । किं किं कथयेयम् ! (व्याघ्रं प्रति) सानन्दं खाद इमम् । (एवं कथयन् काकः निर्गच्छति । व्याघ्रः ब्राह्मणं खादितुम् उच्छलति ।)

ब्राह्मणः—तिष्ठ तावत्, इमं वृषभं पृच्छाव ।

व्याघ्रः—भो वृषभराज ! कृपया आवयोः न्यायं कुरु । अहम् अस्मिन् पञ्जरे आसम् । एष ब्राह्मणः माम् अमोचयत् । क्षुधितः अहं तं खादितुम् इच्छामि । कः दोषः अत्र मे ?

वृषभः—एते मनुष्याः अतीव निर्दयाः कृतघ्नाः च । न मम तेषु दया । तेभ्यः अहं सम्पूर्णं दिनं कार्यं करोमि । श्रान्तोऽहं यदि किञ्चित् विश्रामाय विरमामि ते मां कशया दण्डेन वा ताडयन्ति । न च यच्छन्ति मे उदरपूरणाय पर्याप्तं भोजनम् । स्वार्थसिद्धिः एव तेषां परमधर्मः । सतृप्ति खाद इमम् । (निष्क्रान्तः)

व्याघ्रः—का कथा रे मूढ धर्मस्य अधुना ! उदरपूजा एव परमः धर्मः । चिरम् उपवासात् क्षुधितः अस्मि । जातिधर्मं चरामि । न इच्छामि तव उपदेशम् ।

ब्राह्मणः—हा कष्टम् ! व्यर्थं हिंस्रे अस्मिन् विश्वासः कृतः मया । कृतघ्नः अयं व्याघ्रः । किं करोमि ?

व्याघ्रः—रे मूर्ख ! सङ्कटगतः प्राणी कामपि प्रतिज्ञां कुर्यात् नाम, सङ्कटमुक्तः सः कुतः तां पालयेत् ? केवलं पूजामेव जानासि । नास्ति बुद्धिः नाममात्रापि ते मस्तके ।

ब्राह्मणः—मया रक्षितः त्वम् । मामेव भक्षयसि ? न एतत् उचितम् । मा एवं कृतघ्नः भव । अन्यायं मा कुरु ।

व्याघ्रः—न एषः अन्यायः ब्रह्मन् ! सर्वत्र एषा एव परिपाटिः अस्मिन् जगति ।

ब्राह्मणः—न मे तत्र विश्वासः ।

व्याघ्रः—भवतु । अत्र पञ्च साक्षिणः पृच्छाव । तेषां निर्णयं स्वीकरिष्यामि अहम् । चल, तम् आम्रवृक्षं पृच्छाव ।

ब्राह्मणः—भो आम्र ! त्वमेव आवयोः न्यायं कुरु । एष व्याघ्रः पञ्जरे आसीत् । मया एष मोचितः । अधुना अयं मामेव खादितुम् इच्छति । कृतघ्नः अयं व्याघ्रः ।

आम्रवृक्षः—बन्धो ! एषा एव जगतः रीतिः । अहमपि मनुष्येभ्यः फलानि शीतलां छायां च ददामि । किन्तु मनुष्याः कृतघ्नाः । ते मम शरीरे कुठाराघातं कुर्वन्ति । (व्याघ्रं प्रति) खाद इमं मनुष्यं सरुचि । (व्याघ्रः ब्राह्मणं खादितुं कूर्दते ।)

ब्राह्मणः—तिष्ठ तावत्, एनं काकं पृच्छाव।

व्याघ्रः—भोः काकराज ! आवयोः न्यायं कुरु। अहं पञ्जरे आसम्। एष ब्राह्मणः मां तस्मात् अमोचयत्। अधुना क्षुधितः अहं तं खादितुम् इच्छामि।

काकः—एते मनुष्याः अतिदुष्टाः। वयं काकाः मनुष्याणां सदा सहायकाः। जगतः मालिन्यं दूरीकुर्मः। किन्तु मनुष्याः सर्वदा कथयन्ति—'एते काकाः मलिनाः, कुरूपाः, एतेषां स्वरः च कर्कशः।' ते अस्मासु यथेच्छं दुराचरन्ति, उपलखण्डान् क्षिपन्ति, अस्माकं नीडानि त्रोटयन्ति। किं किं कथयेयम्! (व्याघ्रं प्रति) सानन्दं खाद इमम्। (एवं कथयन् काकः निर्गच्छति। व्याघ्रः ब्राह्मणं खादितुम् उच्छलति।)

ब्राह्मणः—तिष्ठ तावत्, इमं वृषभं पृच्छाव।

व्याघ्रः—भो वृषभराज ! कृपया आवयोः न्यायं कुरु। अहम् अस्मिन् पञ्जरे आसम्। एष ब्राह्मणः माम् अमोचयत्। क्षुधितः अहं तं खादितुम् इच्छामि। कः दोषः अत्र मे ?

वृषभः—एते मनुष्याः अतीव निर्दयाः कृतघ्नाः च। न मम तेषु दया। तेभ्यः अहं सम्पूर्णं दिनं कार्यं करोमि। श्रान्तोऽहं यदि किञ्चित् विश्रामाय विरमामि ते मां कशया दण्डेन वा ताडयन्ति। न च यच्छन्ति मे उदरपूरणाय पर्याप्तं भोजनम्। स्वार्थसिद्धिः एव तेषां परमधर्मः। सतृप्ति खाद इमम्। (निष्क्रान्तः)

व्याघ्रः—न सह्यः मे विलम्बः। (ब्राह्मणं नखरैः धरति।)

ब्राह्मणः—(कम्पमानः) विरम तावत्, पश्य गर्दभः आयाति। तं पृच्छाव। भो गर्दभ! एष व्याघ्रः पञ्जरे बद्धः आसीत्। अहं तम् अमोचयम्। अधुना एष मामेव खादितुम् उद्यतः। कीदृशः अयं न्यायः? विचारशीलः भवान्। करोतु आवयोः न्यायम्।

गर्दभः—सत्यमेव कथितं यत् मनुष्याः विपदि गर्दभं पितः इति सम्बोधयितुम् अपि प्रस्तुताः। अन्यथा ते अस्मान् तृणमपि न मन्यन्ते। सम्पूर्णं दिनं वयं तेभ्यः भृशं कार्यं कुर्मः। ते च पुरस्काररूपेण अस्मान् दण्डेन ताडयन्ति! तेषां सङ्केतेन वयं सर्वं कुर्मः, तस्मात् ते अस्मान् महामूर्खान् मन्यन्ते। यदा ते कस्मैचित् गालिं ददति तदा कथयन्ति 'भो गर्दभ' इति। भृशम् अपमानिताः वयं मनुष्यैः। खाद इमं दुष्टं मनुष्यं ससन्तोषम्। (निष्क्रान्तः)

व्याघ्रः—भो मूर्ख! त्यज अधुना जीवनस्य आशाम्। स्मर अन्तिमवारं स्वम् इष्टदेवम्। (नखरैः ब्राह्मणं धरति।)

ब्राह्मणः—तिष्ठ तावत्, पञ्चमं साक्षिणं पृच्छाव कमपि। (परिक्रम्य) को नु एष आगच्छति? हन्त भोः! शृगालः अयम्। मम अन्तिमाशा।

शृगालः—भोः पुण्यशील ब्राह्मण! अपि कुशलं भवतः? को नाम वृत्तान्तः?

ब्राह्मणः—न कुशलम्। मया पञ्जरात् मोचितः अयं व्याघ्रः।

अधुना एष मामेव खादितुम् उद्यतः। अपि न्याय्यम् एतत्?

शृगालः—(विचार्य) अतीव मन्दोऽहम्। न खलु बोधामि तव भाषणम्। तत् स्थानम् एव गच्छाव येन स्पष्टं पश्यामि सर्वम्।

ब्राह्मणः—भवतु। आगच्छ। एषः अत्र पञ्जरः। अयं व्याघ्रः प्रथमम् आसीत् पञ्जरे। अनेन मार्गेण अहम् अगच्छम्। व्याघ्रेण प्रार्थितोऽहं तम् अमोचयम्।

शृगालः—बाढम्। सुस्पष्टं सर्वम्। त्वं पञ्जरे आसीः। व्याघ्रः अनेन मार्गेण अगच्छत्। त्वां सः अमोचयत्।

व्याघ्रः—(सकोपम्) न एवं रे मूढ! अहम् आसं पञ्जरे।

शृगालः—(सव्याजम्) ननु सत्यं तत्। अहम् आसं पञ्जरे। न हि, न हि। न तथा। कः आसीत् तत्र? मम मनसि मेलः जातः। अस्तु, पुनः विचारयामि। व्याघ्रः आसीद् ब्राह्मणे पञ्जरश्च अगच्छत् मार्गेण। (मस्तकं कण्डूयते।) न एवं भवेत् कदापि। मन्दोऽहं खलु न बोधामि ताम् अवस्थाम्। न कदापि ज्ञास्यामि युगान्तरे जन्मान्तरे वा।

व्याघ्रः—रे मूढ! त्वया अद्य एव, अत्र एव, अस्मिन् जन्मनि एव ज्ञातव्यं सर्वम्। शृणु अवधानेन। कथयामि सर्वं स्पष्टम्। एषः अहं व्याघ्रः। अयं पञ्जरः। सः ब्राह्मणः। अहम् आसम् अस्मिन् पञ्जरे।

शृगालः—क्षम्यतां महाराज! न बोधामि स्थूलमतिः ननु अहम्।

पञ्जरः लघुः, भवान् विशालकायः बलशाली च। कथं भवान् अस्मिन् पञ्जरे आसीत् ?

व्याघ्रः—एवं रे जडमते ! एवम् (इति कथयन् पञ्जरं प्रविशति।)

शृगालः—भवतु (झटिति पञ्जरस्य द्वारं रोधयति)। त्वम् अत्र एव मृत्युं प्रतीक्षस्व। रे शठ ! कृतघ्नस्य अयम् एव उचितः दण्डः। गच्छ भो ब्राह्मण स्वमार्गेण। मा कदापि विश्वासं कुरु मारात्मकस्य वचने।

## पण्डितकौशलम्

(राजा भोजः सिंहासने उपविष्टः। मन्त्री पार्श्वे वर्तते। द्वारपालौ द्वारसमीपे तिष्ठतः।)

दूतः—(प्रविश्य) राजन्, कश्चित् पण्डितः सपरिवारः द्वारे प्रतीक्षते।

राजा—(विचारपूर्वकम्) पण्डितः ! (प्रतिहारम् आह्वयति) प्रतिहार !

प्रतिहारः—(प्रविश्य) आज्ञापयतु देवः।

राजा—दुग्धपूर्णं पात्रमेकं शीघ्रम् आनय।

प्रतिहारः—यथाज्ञा। (निर्गतः। अचिरमेव पुनः प्रविश्य राज्ञः हस्ते दुग्धपात्रं ददाति।)

राजा—(पात्रं गृहीत्वा दूतं प्रति) इदं पात्रं पण्डिताय देहि।

दूतः—यथाज्ञा। (पात्रं पण्डिताय ददाति।)

पण्डितः – (दुग्धपात्रं दृष्ट्वा चकितः भवति। क्षणान्तरे पुत्रवधूं प्रति) वत्से, किञ्चित् सितां देहि। (पुत्रवधूः ददाति। दुग्धे सितां मिश्रयित्वा) भोः! इदं पात्रं भोजराजाय प्रत्यर्पय।

दूतः – (प्रविश्य) राजन्, पण्डितवरः सितां मिश्रयित्वा इदं पात्रं भवते प्रत्यर्पयति।

राजा – (सहर्षम्) विचक्षणः खलु अयं पण्डितः! मन्त्रिवर, अपि भवान् अस्य तात्पर्यं बोधति ?

मन्त्री – क्षम्यतां राजन्! अहं किमपि न बोधामि।

राजा – शृणोतु तावत्। दुग्धपूर्णं पात्रं दत्त्वा अहं तस्मै एतदेव असूचयं यत् अस्माकं राजसभा पण्डितैः पूर्णा। तत्र अन्यस्य अर्थे स्थानं नास्ति इति।

मन्त्री – अथ ब्राह्मणस्य उत्तरं किम् आसीत् ?

राजा – तेन उत्तरितम् – यथा दुग्धे सिता विलीना भवति तस्य माधुर्यं च वर्धयते तथैव अहं पण्डितेषु निलीय स्थास्यामि, सभायाः माधुर्यं च वर्धयिष्यामि।

मन्त्री – अद्भुतम् उत्तरं तस्य!

राजा – अहं तं द्रष्टुम् इच्छामि। (दूतं प्रति) तं पण्डितवरं सपरिवारम् अत्र आनय।

दूतः – यथाज्ञापयति देवः। (दूतेन सह पण्डितः सपरिवारः प्रविशति। सर्वे राजानं प्रणमन्ति।)

राजा – विद्वद्वर, अस्ति मे प्रश्नविशेषः प्रत्येकं प्रति।

पण्डितः – प्रकाशयतु राजन् !

राजा – प्रथमं भवानेव उत्तरं ददातु । कथ्यते संसारे केवलं वस्तुत्रयं महत्त्वपूर्णम् । किं तत् ?

पण्डितः – (किञ्चित् विचार्य) तदिदं राजन् ! काशिवासः, सज्जनसेवा भगवत्पूजा च ।

राजा – अस्तु । (पण्डितस्य पत्नीं प्रति) आर्ये, भवत्याः किं मतम् ?

पण्डितपत्नी – देव ! मम मतेन द्वौ भगवच्चरणौ, तक्रम् इति एतत् त्रयमेव संसारे महत्त्वपूर्णम् ।

राजा – (पण्डितपुत्रं प्रति) भोः पण्डितकुलनन्दन ! अपि जानासि किं स्थानं मानवस्य प्रियतमं सुखकरं च ?

पण्डितपुत्रः–देव, श्वशुरगृहं सर्वेषां प्रियतमं सुखकरं च स्थानम् ।

राजा–कथम् ?

पण्डितपुत्रः –तथा हि उक्तं राजन् !

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।<br>
हरो हिमालये शेते हरिः शेते महोदधौ ।।

राजा–मन्त्रिवर, अस्य अर्थं बोधयतु येन सर्वेषां स्पष्टीभवेत् ।

मन्त्री – श्रूयतां तावत् । श्वशुरालय एव संसारे सर्वोत्तमं श्रेष्ठं च स्थानम् । तत्र प्रमाणं हरः इति महादेवः, हरिः इति विष्णुः । हरः स्वश्वशुरगृहे हिमालये एव वसति विष्णुः च क्षीरसागरे शयनं करोति । अनेनैव श्वशुरालयस्य महत्त्वं स्पष्टम् । किमत्र अधिकं वाच्यम् ?

राजा – साधु । रुचिरं खलु पण्डितपुत्रस्य उत्तरम् । (पण्डितस्य

पुत्रवधूं प्रति) वत्से, त्वामपि प्रश्नमेकं पृच्छामि । मम विचारेण संसारस्य सारः नारी एव । अपि त्वं सम्मता ?

वधूः – युक्तम् उक्तं भवता । नारीं विना महादानी, परमदयालुः, दिगन्तकीर्तिः राजा भोजः कथं संसारे अवतीर्णः अभविष्यत् ?

राजा – (परमप्रीतः) परमतुष्टोऽहं भवताम् उत्तरैः । (मन्त्रिणं प्रति) मन्त्रिवर ! पण्डित-परिवारः अत्रैव स्थास्यति । तदर्थं सुव्यवस्था त्वरितं कर्तव्या ।

मन्त्री – यथाज्ञा देवस्य । (मन्त्री पण्डित-परिवारेण सह निर्गतः ।)

# दरिद्रचातुर्यम्

(राजा भोजः सिंहासने उपविष्टः । दूतः आगत्य)

दूतः – देव, कश्चिद् दरिद्रः भवतो दर्शनप्रार्थी ।

राजा – सादरम् आनय अत्र । (दूतः निर्गत्य दरिद्रेण सह प्रत्यागच्छति ।)

राजा – कुतः आगच्छसि भोः ?

दरिद्रः – कैलासात् आगच्छामि देव !

राजा – ब्रूहि, अपि भगवान् शिवः सकुशलः ?

दरिद्रः – तस्य कुशलतायाः प्रश्नः एव न उदेति । स तु दिवं गतः !

राजा – दिवं गतः ! कथम् ? अस्माभिस्तु नैव श्रुतम् !

दरिद्रः – राजन्, तस्य मरणं वर्षशतकात् पूर्वम् आरब्धम् आसीत् । अधुना, अचिरमेव समाप्तिम् अगच्छत् ।

राजा – आश्चर्यम् ! कथं तत् सम्भवम् ?

दरिद्रः – शृणोतु राजन् ! स किल हरिहररूपः । अतः अर्धं शरीरं हरिः अर्थात् भगवान् विष्णुः अहरत् ।

राजा – अन्यत् अर्धम् ?

दरिद्रः – कथयामि राजन् ! स पुनः अर्धनारीश्वरः अपि । तस्मात् अन्यत् अर्धं पार्वती देवी अनयत् ।

राजा – ततस्ततः ?

दरिद्रः – ततः अवशिष्टाः तस्य अलङ्काराः । तन्मध्यात् आकाशः चन्द्रम्, पृथ्वी गङ्गाम्, सर्पराजः वासुकिः नागम् अनयत् ।

राजा – ततः परम् ?

दरिद्रः – ततः परम् आसन् तस्य गुणाः ।

राजा – ते कुत्र गताः ?

दरिद्रः – तान् अन्ये विभज्य अनयन् ।

राजा – के ?

दरिद्रः – दानशीलताम्, उदारतां वीरतां च भवान् अनयत् । अन्ते एक एव गुणः अवशिष्टः...

राजा – (सहासम्) कः गुणः ?

दरिद्रः – भिक्षुकता । स गुणः मम भागम् आगच्छत् । (भिक्षापात्रं दर्शयन्) तमेव गृहीत्वा अधुना अहं भूलोके भ्रमामि ।

राजा – कोऽस्ति तत्र ?

सेवकः – (प्रविश्य) आज्ञापयतु राजन् !

राजा – अस्मै महिषीम् एकां देहि।

सेवकः – (अप्रसन्नः द्वेषभावेन) यथाज्ञा। (अप्रकाशम्) यथा अर्थी तथा दानम् ! (निर्गत्य अस्थिकङ्कालसारां महिषीम् आनीय दरिद्रं प्रति) गृहाण इमाम्।

दरिद्रः – (महिषीं सर्वतः दृष्ट्वा तस्याः कर्णे किमपि वदति। ततः निजकर्णं तस्याः मुखस्य पार्श्वे आनीय किमपि शृणोति इव।)

राजा – (एतत् सर्वं दृष्ट्वा बोधन् इव) किं भोः ! किं करोषि ?

दरिद्रः – न हि राजन् ! न विशेषं किमपि।

राजा – तथापि कथय स्पष्टम्।

दरिद्रः – इमां पृच्छामि – राजा इच्छति यत् अहं तव दुग्धं पिबेयम्। किं तस्य इच्छां पूरयिष्यसि ?

राजा – (समोदम्) किं वदति सा ?

दरिद्रः – राजन्, क्रोधेन सा मां वदति – न पश्यसि मम शरीरम् ? दन्ताः गलिताः, शृङ्गे भग्ने, चर्म शिथिलम्, कङ्कालमेव अवशिष्टम्। तथापि इच्छसि दुग्धम् ! क्रूर, निर्दय, अपेहि, अपेहि शीघ्रम् !

राजा – (भीतं सेवकं प्रति) अरे पामर, अपि एषा महिषी दानयोग्या ? अपदार्थ, राजकार्ये अयोग्यः त्वम्। गच्छ इतः। कोऽस्ति तत्र ? कोषाध्यक्षम् आह्वय।

कोषाध्यक्षः – (प्रविश्य) विजयतां देवः। का आज्ञा ?

राजा – अस्मै धेनूनां महिषीणां च प्रत्येकशः सहस्रं दातव्यम्।

भो भिक्षो, यत्र त्वं वससि तत्र न एकोऽपि क्षुधितः, पीडितः दुःखितः च स्यात् । गृहाण एताः, सुखेन जीवनं यापय ।

दरिद्रः – विजयतां महाराजः भोजः । अनुगृहीतोऽस्मि राजन् ! चिरञ्जीवतु भवान् ।

# गोवर्धनधारणम्

(कृष्णः सुप्तः अस्ति । माता यशोदा पूजायाः वस्तूनि सज्जीकरोति । पिता नन्दः सर्वान् गोपान् वस्तुभिः सह प्रेषयति । सर्वे बालकाः आगच्छन्ति गच्छन्ति च ।)

कृष्णः – (सुप्तोत्थितः, सर्वं दृष्ट्वा) मातः, किं करोषि ? सर्वे कुत्र गच्छन्ति ?

यशोदा – अद्य इन्द्रस्य पूजा अस्ति ।

कृष्णः – किमर्थम् ?

यशोदा – इन्द्रः वृष्टिं करोति, तेन घासः रोहति ।

नन्दः – गावः घासं खादन्ति, दुग्धं ददति । दुग्धात् दधि, नवनीतम्, घृतम् इत्यादि भवति यत् त्वं खादसि ।

कृष्णः – न, गोवर्धनः सर्वं ददाति, न तु इन्द्रः ।

यशोदा – कृष्ण, एवं मा वद । इन्द्रः क्रुद्धः भविष्यति । स किमपि न दास्यति ।

कृष्णः – न, अद्य गोवर्धनस्य पूजा भविष्यति ।

यशोदा—साधु, साधु । (नन्दं प्रति) वयं गोवर्धनं गत्वा इन्द्रस्य पूजां करिष्यामः ।

नन्दः—हं । (कृष्णं प्रति) साधु, वयं गोवर्धनं गच्छामः ।

(वाद्यम्)

(कृष्णः प्रसन्नः सज्जः भवति । सर्वे गोवर्धनं गच्छन्ति । शिखरे उपविश्य नैवेद्यादिकं स्थापयित्वा, नेत्रे निमील्य इन्द्रं प्रार्थयन्ते ।)

सर्वे—हे इन्द्रदेव, प्रसीद त्वम् । काले वर्ष । (सर्वेषु निमीलित-नेत्रेषु कृष्णः नैवेद्यपात्रात् भोजनम् आरभते । यशोदा प्रार्थनायाः परं नेत्रे उन्मील्य, खादन्तं कृष्णं दृष्ट्वा सक्रोधम्)

यशोदा—(कृष्णस्य हस्तं धृत्वा) कृष्ण, किं करोषि ! पूजां कृत्वा खाद ।

कृष्णः—त्वं किमर्थम् इन्द्रं पूजयसि ? गोवर्धनं पूजय ।

यशोदा—आः, अतिहठी त्वम् ।

नन्दः—कृष्ण, वयं गोवर्धनं पूजयामः । त्वं मा खाद ।

कृष्णः—सुष्ठु ।

(सर्वे गोवर्धनं पूजयन्ति ।)

इन्द्रः—अहो ! एते मम पूजां न कुर्वन्ति ! मेघाः, (मेघाः आगच्छन्ति ।) यूयम् अद्य गोकुले वर्षत । सर्वं जले मज्जयत ।

मेघाः—यथा आज्ञा ।

(वाद्यम्)

(मेघाः क्रमशः सवेगं वर्षन्ति । सर्वे क्लिद्यन्ति । गोवर्धने उपविष्टाः सर्वे उत्तिष्ठन्ति ।)

यशोदा—(सक्रोधम्) कृष्ण, सर्वं तव कारणात् भवति । इन्द्रः क्रुद्धः । अधुना तव गोवर्धनः किं करिष्यति ?

कृष्णः—(सहासम्) मातः, स रक्षिष्यति । सर्वे नेत्रे निमीलयत । (सर्वे नेत्रे निमीलयन्ति । कृष्णः गोवर्धनं प्रणम्य वामकनिष्ठया तम् उत्थापयति ।)

कृष्णः—आगच्छत, गोवर्धनस्य नीचैः आगच्छत । (सर्वे नेत्रे उन्मील्य चकिताः पश्यन्ति, तस्य नीचैः च गच्छन्ति । इन्द्रः कुपितः मेघान् अधिकाधिकं वर्षणाय आदिशति । वाद्यम् । जले समाप्ते)

मेघाः—राजन्, कोऽपि न मृतः । वयं क्लान्ताः ।

इन्द्रः—ओ, कोऽपि न मृतः ? कृष्णः सर्वान् रक्षति ? अहम् अज्ञानी, महामूढः । कृष्णः भगवान् । (कृष्णस्य चरणयोः उपविश्य) भगवन्, मां क्षमस्व । पुनः कदापि एवं न करिष्यामि ।

कृष्णः—अस्तु । इन्द्र, प्रसन्नः भव । (इन्द्रः प्रणम्य गच्छति । परं सर्वे जनाः गोवर्धनस्य निम्नतः गच्छन्ति । अन्ते श्रीकृष्णः गोवर्धनं भूमौ स्थापयित्वा प्रणम्य च निर्गच्छति ।)

# सत्यनिष्ठा

(कश्चित् चपलः बालकः वृक्षे उपविश्य निरीक्षते । पण्डितः नद्यां स्नात्वा, वृक्षमूले उपविश्य, "ॐ नमो भगवते वासुदेवाय" इति मन्त्रम् उच्चार्य, नासिकां धृत्वा प्राणायामं करोति । यदा स गन्तुम् उद्यतः तदा –)

बालकः – (वृक्षात् अवतीर्य) त्वं किं करोषि ? वद, किमर्थं नासिकां धरन् उपविशसि ?

पण्डितः – (हसन्) त्वं न बोधिष्यसि । त्वं लघु-बालकः । एतत् सर्वं परं ज्ञास्यसि ।

बालकः – न हि, न हि । त्वं वद – किमर्थं नासिकां धरन् उपविशसि ? यावत् न वदसि तावत् न मुञ्चामि । (इति हस्तं धरति)

पण्डितः – मुञ्च माम्, मुञ्च । (आत्मानं मोक्तुं चेष्टते ।)

बालकः – न हि । त्वं वद, कृपया त्वं वद ।

पण्डितः – अस्तु, वदामि, शृणु । यदि कोऽपि उपविश्य, इत्थं नासिकां धृत्वा नेत्रे निमील्य च भगवन्तं स्मरति तर्हि सः अवश्यं भगवन्तं पश्यति ।

बालकः – (प्रसन्नः) सत्यम् ?

पण्डितः – आम्, आम्, सत्यम् ।

(बालकः तत्क्षणं पण्डितं मुञ्चति । पण्डितः हरिः ॐ हरिः ॐ इति जपन् निर्गतः ।)

बालकः—अहमपि भगवन्तं द्रष्टुम् इच्छामि। नद्यां स्नात्वा, वृक्षमूले उपविश्य नासिकां धरामि। (स तथा करोति।)

कृष्णः—भो बाल ! आगतोऽहम् ! पश्य माम्।

बालकः—(कृष्णं दृष्ट्वा) त्वं कः ?

कृष्णः—अहं कृष्णः। त्वं मां स्मरसि। नैवम् ? अहम् आगतः।

बालकः—अहं कथं जानामि त्वं कृष्णः इति ? त्वं तु कदापि न दृष्टः।

कृष्णः—(हसन्) त्वं कमपि पृच्छ। अहं कृष्ण एव।

बालकः—तिष्ठ। यः पण्डितः त्वां प्रतिदिनं पश्यति तम् आह्वयामि। किन्तु...

कृष्णः—किन्तु किम् ?

बालकः—यदि त्वं पलायेथाः ! अहं त्वां बद्ध्वा गमिष्यामि। (तथा करोति।)

(बालकः धावन् गच्छति। पण्डितं दृष्ट्वा)

बालकः—भोः पण्डित-महाशय ! तिष्ठतु, तिष्ठतु।

पण्डितः—किं जातम् ? अधुना किम् इच्छसि ?

बालकः—त्वं शीघ्रं मया सह चल। तत्र मया भगवान् कृष्णः वृक्षे बद्धः। त्वं दृष्ट्वा कथय स सत्यमेव भगवान् कृष्णः न वा। त्वं तु तं प्रतिदिनं पश्यसि। नैवम् ? चल, शीघ्रं चल। (इति कथयन् तस्य बाहुं धृत्वा तं कर्षन् नयति। कृष्णस्य सम्मुखम् आगत्य।)

बालकः—पश्य, कः अयम् ?

पण्डितः—कः ? कुत्र ?

बालकः—एष चपलः यः बद्धः अपि हसति।

पण्डितः—कः हसति ? अहं तु कमपि न पश्यामि !

बालकः—कथं त्वं न पश्यसि ? स तव सम्मुखे वृक्षे बद्धः अस्ति।

पण्डितः—(बालकस्य पादौ धृत्वा) रे बाल ! त्वमेव मम गुरुः।
दर्शय मां कृष्णम्, दर्शय। कुत्र सः ? कुत्र मम देवः ?

बालकः—(कृष्णं मुक्त्वा) कृष्ण, त्वं तस्मै दर्शनं देहि।
(श्रीकृष्णः सस्मितं वंशीं वादयति। तेन पण्डितस्य ज्ञानचक्षुः उन्मीलितम्। स भक्तिपूर्वकं गद्गदहृदयेन तं प्रणमति। बालकोऽपि प्रणामं करोति।)

## उत्तरं देहि

कः कम्, कदा अधोलिखित-वाक्यानि वदति ?

१. अधुना त्वम् उपनेत्रे धारयसि !
२. अहो भीतोऽहम् !
३. आम्, एताः रोचन्ते।
४. वयं न नूतनाः।
५. सत्यं महद् आश्चर्यम् !
६. सेवा परमधर्मः।
७. रात्रौ मया अद्भुतः स्वप्नः दृष्टः।
८. परोपकाराय इदं शरीरम्।

९. अहो सायङ्कालः सञ्जातः ! पिता आगमिष्यति अधुना ।
१०. तिष्ठत ! तिष्ठत ! न एवम् । यत् कथयामि तत् शृणुत ।
११. पलायध्वम् ! पलायध्वम् !
१२. मरणात् पूर्वं तस्य इच्छा पूरणीया ।
१३. सोऽतीव भयङ्करः, क्रूरः, कृतघ्नः ।
१४. किमर्थं मम सम्मुखे मिथ्या वदसि ?
१५. किमहं पुष्पाणि खादिष्यामि ?
१६. मया सह चल । मम गृहे स्थास्यसि, खादिष्यसि, खेलिष्यसि ।
१७. अनन्तं गौरवं तेऽम्ब, अमेया खलु ते कृपा ।
१८. मन्ये तव हृदये अधुना अज्ञानस्य राज्यम् ।
१९. पश्चात्तापेन दग्धं मे पूर्वाचरितं पापम् । यत् किमपि अवशिष्टं तदपि तव दर्शनेन नष्टम् ।
२०. एतादृशम् अपमानं किं सहिष्यामहे ?
२१. अहमपि भगवन्तं द्रष्टुम् इच्छामि । नद्यां स्नात्वा, वृक्षमूले उपविश्य, नासिकां धरामि ।
२२. देव ! मम मतेन भगवच्चरणौ, तक्रम् इति एतत् त्रयमेव संसारे महत्त्वपूर्णम् ।
२३. अरे पामर ! अपि एषा महिषी दानयोग्या ? अपदार्थ ! राजकार्ये अयोग्यः त्वम् । गच्छ इतः !
२४. अहो ! एते मम पूजां न कुर्वन्ति ! मेघाः, यूयम् अद्य गोकुले वर्षत । सर्वं जले मज्जयत ।

# शब्दार्थाः

| पृष्ठम् | पङ्क्तिः | शब्दः | आङ्गल्यर्थः |
|---|---|---|---|
| ३ | ३ | भाचित्रम् | photo |
| ४ | १९ | महाविद्यालयः | college |
| ४ | २१ | स्नातकचर्या | study upto B.A. course |
| ५ | ३ | श्रेणी/कक्षा/वर्गः | class |
| ७ | १७ | मण्डलम् | district |
| ८ | ५ | उच्चविद्यालयः | high school |
| ८ | १६ | पत्कन्दुकम् | football |
| ८ | १६ | यष्टिकन्दुकम् | hockey |
| ८ | १६ | अपातकन्दुकम् | volleyball |
| ८ | १६ | फालका | cricket |
| ८ | १७ | शिक्यकन्दुकम् | basketball |
| ९ | १३ | आवेगः | excitement |
| ९ | १७ | आत्मानुशासनम् | self-discipline |
| १८ | ६ | होरा | hour |
| १८ | ८ | कला/गलम् | minute |
| १८ | १० | विकला/विपलम् | second |
| २२ | १८ | भोजनिलयः | hotel |
| २३ | ४ | उपाहारगृहम् | restaurant |
| २३ | ७ | वार्तापत्रम्/वृत्तपत्रम् | newspaper |
| २३ | १२ | प्रातराशः | breakfast |
| २४ | १५ | धूमवर्ती | cigarette |
| २८ | २ | प्रसेवः | bag |

| पृष्ठम् | पङ्क्तिः | शब्दः | आङ्ग्लार्थः |
|---|---|---|---|
| ३२ | २० | संवियुत्कम् | switch |
| ३३ | ६ | अङ्कनी | pencil |
| ३३ | ९ | लेखनी | pen |
| ३३ | १२ | द्रप्सकम् | dropper |
| ३८ | १ | सिता | sugar |
| ४१ | २३ | शोध्यवाचकः | proof-reader |
| ४१ | २५ | वागोलः | balloon |
| ४१ | २५ | संगणित्रम् | computer |
| ४२ | १ | निर्माणी | factory |
| ४२ | १ | पेषणी | grinding mill |
| ४४ | ७ | नुदति | pushes |
| ४४ | २० | कर्तनी | scissors |
| ४८ | १६ | अधिकोषः | Bank |
| ५० | ३ | प्रतिप्रस्थम् | per kilo |
| ५३ | ९ | स्तीर्णकार्पासम् | terecotton |
| ५४ | ५ | अवहारः | rebate |
| ५४ | ८ | बीजकम् | bill |
| ५८ | ५ | स्थेशनम्/स्थात्रम् | station |
| ५९ | १३ | उपनेत्रे | spectacles |
| ६२ | १ | उपाहारः | tiffin |

## कुटुम्बम्

अग्रजः elder brother
अनुजः younger brother
कुटुम्बम्/परिवारः family
जामाता (जामातृ) son-in-law
देवरः husband's younger brother
दौहित्री daughter's daughter
पतिः/स्वामी (स्वामिन्) husband
पत्नी/स्त्री wife
पिता (पितृ) father
पितामहः paternal grand-father
पितृव्यः father's brother
पितृष्वसा/पितुःष्वसा/पितुःस्वसा father's sister
पुत्री/दुहिता (दुहितृ) daughter
ननन्दृपतिः/ननन्दुः पतिः the husband of a husband's sister
पौत्री grand daughter
भगिनी/स्वसा (स्वसृ) sister
भागिनेयी sister's daughter
भ्रातृजः brother's son
भ्रातृजाया brother's wife

अग्रजा elder sister
अनुजा younger sister
कुलम्/वंशः lineage, dynasty
ज्येष्ठः husband's elder brother
दौहित्रः daughter's son
ननन्दा (ननन्दृ) husband's sister
पितरः (पितृ–बहुवचने) fore-fathers
पितामही paternal grand-mother
पितृव्यपत्नी/पितृव्या father's brother's wife
पुत्रः son
पुत्रवधूः/स्नुषा daughter-in-law
पूर्वजाः ancestors
पौत्रः grandson
बान्धवाः/सम्बन्धिनः relations
भागिनेयः sister's son
भ्राता (भ्रातृ) brother
भ्रातृजा brother's daughter
माता (मातृ) mother

मातामहः maternal grand-father
मातामही maternal grand-mother
मातुलः maternal uncle
मातुलानी/मातुला/मातुली aunt
मातृष्वसा/मातुःस्वसा mother's sister
वरः bridegroom
विमाता (विमातृ) step mother
श्वशुरः father-in-law
श्वश्रूः mother-in-law
श्यालः wife's brother
श्याली wife's sister
सम्बन्धी (सम्बन्धिन्) the father of a bridegroom or a bride

## पशु-पक्षि-कीटाः

अजः/छगलः/छागः goat
उलूकः owl
कच्छपः tortoise
कपोतः pigeon
कलन्दकः/चमरपुच्छः squirrel
काकः crow
कारण्डः a kind of duck
कर्कटः crab
कीटः insect
कृमिः m.* worm
कुक्कुटः cock
कुक्कुरः dog
कुम्भीरः/मकरः crocodile
गर्दभः ass
गृध्रः vulture
गौः cow
घोटकः/अश्वः horse
चटकः sparrow
चित्रलः butterfly
चिल्लः kite
जीवाणुः germ
नकुलः mongoose
पतङ्गः/शलभः moth
पशुः animal
पक्षी (पक्षिन्) bird
वकः crane

*m.—masculine, f.—feminine, n.—neuter.

विडालः cat
भल्लूकः bear
मधुमक्षिका bee
मत्स्यः/मीनः fish
मशकः mosquito
मीनरङ्कः kingfisher
मेषः sheep
लूता spider
वृकः wolf
वृषभः bull
शशकः rabbit
शूकरः hog
श्येनः hawk
सिंहः lion
हंसः goose
भ्रमरः a large black bee
मक्षिका fly
मत्कुणः bug
मयूरः peacock
महिषः buffalo
मूषकः mouse
यूका louse
वानरः monkey
वृश्चिकः scorpion
व्याघ्रः tiger
शुकः parrot
शृगालः jackal
सर्पः snake
हरिणः deer
हस्ती (हस्तिन्) elephant

## शरीरम्

अग्न्याशयः pancreas
अङ्गुष्ठः thumb
अश्रु n. tear
उदरम् stomach
कनिष्ठिका little finger
कण्ठः/गलः throat
कफः phlegm
कक्षः armpit
अङ्गुलिः f. finger
अनामिका ring finger
अस्थि n./हड्डम् bone
ओष्ठः lip
कटिः f. waist
कपोलः cheek
कर्णः ear
केशः hair

ग्रीवा neck
टङ्गा leg
जिह्वा tongue
दन्तः tooth
धमनी artery
नाभिः f. navel
नेत्रम् eye
प्लीहा spleen
पित्तम् bile
पृष्ठवंशः back-bone
बाहुः arm
मध्यमा middle finger
मस्तकम् head
मांसम् flesh
मुष्टिः f. fist
यकृत् n. liver
रोम (रोमन्) n. hair on the body
वक्षः (वक्षस्) n. chest
वृक्कः kidney
शरीरम्/देहः body
शोफः/त्वक्शोफः blister
स्तनः breast
सिङ्घाणम् nasal discharge
स्फोटः boil
हस्तः hand

गुम्फः moustache
जानु n. knee
तर्जनी index finger
दाढिका beard
नखम् nail
नासिका nose
पर्शुका rib
पादः foot
पिण्डिका calf of the leg
फुप्फुसः lungs
मज्जा marrow
मलम् faeces
मस्तिष्कम् brain
मुखम् mouth, face
मूत्रम् urine
रक्तम् blood
ललाटम् forehead
लाला saliva
वीर्यम् semen
वेणी plait of hair
शिरा vein
स्कन्धः shoulder
स्नायुः sinew
स्वेदः sweat
हनुः chin
हृदयम् heart

## भोजनम्

अण्डम् egg
कापिशम् coco
कुण्डलिका 'jalebi'
गुडः jaggery
गोधूमः wheat
चर्पटी 'chapati'
चायः tea
तक्रम् butter milk
दधि n. curd
दालिः f. pulse
पयोहिमम् ice-cream
पायसम् 'payasa', a semi-liquid sweet preparation of rice or anything else in milk.
भर्जः fried vegetable
मांसम् meat
मिश्रान्नम् mixture
रोटिका bread
लेह्यम् 'chatani', a lickable article of food.
शाकः vegetable
सन्धितम् pickles

कर्तपूरः sandwich
कापेयम् coffee
कृशरा 'khichadi', rice and pulse cooked together.
घृतम् ghee
चिपिटकः rice flakes
तण्डुलः rice (uncooked)
तेमनम् vegetables (cooked)
दधिवटकम् 'dahivada'
दुग्धम् milk
पानकम् drink
पूरिका 'puri'
फलपाकः jam
फुल्लपूरः cake
भक्तम् rice
भृष्टान्नम् fried grain
मिष्टिका toffee
यूषः soup
लवणम् salt, salty
लाजाः m. pl. parched grains
शकलादः salad
समिता 'maida'

अम्ल sour
तिक्त bitter
आलवण saltish
जलमय watery

कटु pungent
मधुर sweet
तैलाक्त oily
सोपस्कर spicy

आपनसम् pineapple
आर्द्रकम् ginger
एरककंटी papaw
कर्कटी cucumber (big size)
कादलम् banana
खर्जूरम् date
चिञ्चा tamarind
त्रपुषम् cucumber (small size)
तालम् palm fruit
द्राक्षा grape
नारङ्गम् orange
निम्बूकम् lemon
पलाण्डुः onion
पूगम् betel-nut
भिण्डा lady's finger
कृष्णमरिचम् black pepper
मूलकम् radish
रक्तमरिचम् chilli
लशुनम् garlic
सर्षपः mustard seed

आम्रम् mango
आलुकम् potato
कपिशाकम् cabbage
काजूतकम् cashew-nut
कूष्माण्डम् pumpkin
गाजरम् carrot
जीरकः cumin seed
ताम्बूलम् 'paan', the leaf of a piper betel
दाडिमम् pomegranate
धन्याकम् coriander seed
नारिकेलम् coconut
पनसम् jack fruit
पुष्पशाकम् cauliflower
भटमाषः soyabean
भूचणकः groundnut
मुद्गः a kind of kidney bean
रक्तवृन्ताकः tomato
वृन्ताकः brinjal
शोभाञ्जनम् drumstick
सूरणः an esculent root

सेवम् apple

हरिद्रा turmeric

हरित-/आर्द्र-मरिचम् green chilli

## वस्त्राणि

अङ्गोञ्छः 'gamachha'

आङ्गिकम् vest

उत्तरच्छदः bedsheet

उष्णीषः turban

ऊरुकम् shorts

कम्बलः blanket

गलपट्टः muffler

चण्डातकम् a short petticoat

चोलिका/कूर्पासः blouse

तल्पः mattress

धौतम् 'dhoti'

पटलच्छदः table cloth

पादयामः pyjamas

प्रोञ्छः towel

युतकम् shirt

शयनच्छदः bedcover

शाटी 'sari'

सुचीरम् ribbon

अन्तरीयम् underwear

आस्तरणम्/कुथा carpet

उत्तरीयम् upper body garment

करवस्त्रम् handkerchief

कौपीनम् loins-cloth

घर्घरी skirt

चोलः 'kurta'

पदीनम् trousers

तिरस्करिणी curtain

निषद्या sofa

पादच्छदः sock

प्रावारः overcoat

मशहरी mosquito-net

वासा frock (dress for children)

शालः shawl

स्वेदित्रम्/स्वेदनकम् sweater

उपधानम् pillow

कङ्कतः comb

उपानहौ shoes

कटिबन्धः belt

कुड्मम् button
टोपिका cap
पदत्रे/पादत्रे 'chappals'
स्वजः clip
हस्तपः glove
गोहः pocket
दर्पणः mirror
लक्ष्मकम् a badge
सन्धरः buckle
हारः necklace

## गृहम्

अङ्गनम् courtyard
अग्नीषिका matchstick
आस्तरी an iron
कटः mat
करण्डः basket
कूपः a well
क्षेप्यभाण्डम् dustbin
चमसः spoon
छत्रम् umbrella
दन्तकूर्चः toothbrush
दन्तलेपः toothpaste
द्वारम् door
धायः almirah
नखकर्तः nail-cutter
पर्यङ्कः bedstead
प्रशीतकम् refrigerator
पात्री basin
पिधानम् lid
अग्निपेटिका matchbox
आणिः m. pin
उपधिः m. chair
कटोरः bowl
कर्तरी cutter
कूपी bottle
खट्वा cot
चषकः cup
छादम् roof
दन्तमञ्जनम् toothpowder
दोलः bucket
धरणिः f. beam
धूलिचयनकम् dust-collector
निधायः shelf
प्रशाला hall
पाकशाला/महानसः kitchen
पानिलम् a glass
यन्त्रधारा shower

रज्जुः f. rope
वरण्डः verandah
वातिकः gasman
वातिरम्भः gas cylinder
वीजनम् fan
शीतकम् water cooler
सभाजनकक्षः drawing-room
स्थाली dish
स्नानागारम् bath-room
सिक्थवर्ती candle
सुधालेपः whitewash
सूत्रम् thread
वज्रचूर्णम् cement
वातायनम् window
वातितापनी gas-stove
विवरी tap
शयनकक्षः bed-room
शौचालयः w.c., latrine
स्तम्भः pillar
स्थालिका plate
स्वफेनः soap
सुखासनम् armchair
सूची needle
स्योतम् bag

## प्रकीर्णशब्दाः

अक्षः axle
अग्रिमम् advance
अन्तर्देशीयपत्रम् inland letter
अभियन्ता (अभियन्तृ) engineer
आपणिकः shopkeeper
आरोधः brake
आशुलिपिकः stenographer
ईरित्रम् motor (engine)
ईर्ययानम् car
उत्तरपत्रकम् reply postcard
उपचारिका nurse
अग्रदीपः front light
अध्यादेशः ordinance
अभिकर्ता (अभिकर्तृ) agent
आपणः shop
आरक्षणम् reservation
आवरकम् envelope
ईर्यचक्रम् motor-bike
ईर्यनौका motor-launch
ईर्यवह्यम् auto-rickshaw
उदञ्चः pump
औषधम् medicine

कासः cough
कोषिका cassette
क्रयः buying
क्षुरधानी razor-box
ग्राहकः customer
चालकः/यानचालकः driver
टङ्ककः typist
तापमानम् thermometer
देयमूल्यप्रेषः value payable post
ध्वनिवादित्रम् tape recorder
नवयोगः repair
निकर्तः stencil
पञ्जीयितपत्रम् registered letter
पट्टिका bandage
पत्रपेटिका postbox
परिकौतुकम् circus
प्रकाशः light
प्रलेपः ointment
प्रेषपत्रकम् postcard
प्रेषवाहः postman
प्रेषालयः postoffice
भाण्डयानम् truck
माप-/अङ्क-रेखकः scale
मूल्यम् price
यात्रा-/प्रवेश-पत्रकम् ticket

कुतैलम्/मृत्तैलम् kerosene
कर्षित्रम् tractor
क्रेता (क्रेतृ) buyer
क्षुरफलकम् razor-blade
घण्टिका bell
जनित्रम् generator
टङ्कनयन्त्रम् typewriter
द्विचक्रम् bicycle
धनप्रेषः money-order
नलदीपः tube-light
नालः tube
निगः plug
पटलदीपः table lamp
पण्यम् commodity
पद्दलः pedal
पविः m. tyre
प्रतैलम्/मार्त्तैलम् petrol
पुस्तप्रेषः book-post
प्रेषमुद्रा postal stamp
प्रेषाध्यक्षः postmaster
भाचित्रकः photographer
भ्रमिः m. screw
मार्गदीपः street lamp
यन्त्रज्ञः mechanic
रक्षिकः/रक्षिपुरुषः policeman

रुग्णवाहनम् ambulance
रेखकः ruler
लेखन्याधारः pen-stand
वह्यम् rickshaw
विक्रेता (विक्रेतृ) seller
विद्युत्कन्दः bulb
विधेयकम् bill (before passing into law)
वेधः puncture
व्यापारः business, trade
शिशुयानम् pram
शृङ्खला chain
समूहा battery
सम्प्रथकम् transistor
संवेष्टनम् packing
सीवित्रम् sewing machine
सृपम् slide
रूपित्रम् camera
लिपिकः clerk
लेखाधारः desk
विक्रयः selling
वितन्तुकम् radio
विद्ध punctured
विपणिः f. market
वृत्तचित्रम् documentary film
व्यापारी (व्यापारिन्) businessman, trader
श्लेषः glue
समूहावर्ती torchlight
संयानम् train
सर्वयानम् bus
स्कुन्दनम् scooter
सृपदर्शनम् slide show

## कुशलकामनाः, कुशलप्रश्नाः, अभिनन्दनानि

सुप्रभातं विष्णो/रमेश/हरे/गीते/सावित्रि/भ्रातः/स्वसः ! Good morning Vishnu/Ramesh/Hari/Gita/Savitri/brother/sister !
अयि / अये / हे / हला (स्त्रीणां सम्बोधने) Hallo !
आर्य/महाशय/महोदय/श्रीमन् Sir ! आर्ये/महाशये/महोदये/भद्रे Madam !
सुवर्षम् / शुभं नववर्षम् Happy New Year !
सुजातम् Merry Christmas !

शिवास्ते पन्थानः सन्तु । Have a nice trip, bon voyage.
यात्रा ते निर्विघ्ना भूयात् । May your journey be without obstacles. कृतमस्तु । Good luck.
अनुगृहीतोऽस्मि, अनुगृहीताऽस्मि (feminine) । I am much obliged, thanks a lot. धन्यवादाः Thanks.
किं भोः ! कथं वर्तसे ? Hallo ! How are you doing ?
शं भोः ! O.K. / fine. आगच्छ / एहि / आयाहि । Come.
उपविश / आस्स्व । Sit. आसनं गृहाण । Take your seat.
अपि सर्वं कुशलम् ? Is everything fine ?
अपि सौख्यम् ? Are you happy ?
अपि अनामयम् ? How is your health ?
भगवत्प्रसादात्, देव-/प्रभु-/मातृ-/हरि-कृपया सर्वं कुशलम् ।
Everything is fine by God's Grace ...
कः अद्यतनः समाचारः ? What is today's news ?
का ह्यस्तनी वार्ता ? What is yesterday's news ?
किं श्वस्तनं चलचित्रम् ? What is tomorrow's film ?
क्षम्यताम् / क्षमस्व माम् / क्षन्तव्योऽहम् / क्षन्तव्याऽहम् । Excuse me.
किञ्चिद् उत्सर कृपया Please move a little.
कोऽत्र भोः ? Who is here ? अयमहं भोः ! It's I.
अहमत्र भोः / अत्रास्मि भोः Hello ! I am here !
विलम्बं मा कुरु / मा विलम्बस्व / मा चिरय । Don't delay.
नमोऽस्तु / नमो नमः / नमस्काराः । नमस्ते । सुस्वागतम् । अभिवादये । वर्धस्व / वर्धताम् । विजयस्व/विजयताम् । वर्धापयामि । शतं जीव । चिरं जीव । दीर्घायुर्भव । आयुष्मान् भव । आयुष्मती भव । सुखी / सुखिनी / विजयी / विजयिनी भव । शुभमस्तु । मङ्गलमस्तु ।